॥ श्रीविश्वेश्वरो जयति ॥

# ॥ मनोरमा शब्दरत्नसंवलिता ॥

॥ काश्यां विद्योदयनाम्नि यन्त्रालये मुद्रयितुमुपक्रान्ता ॥

॥ विद्योदयो निराकुर्य्यादविद्यातिमिरं सदा ॥

सं० १९३० ॥ सहस्रांशुरिवाशेषं मुद्राकिरणराजिभिः ॥ भाद्र० कृ० १० रवौ

श्रीगणेशायनमः॥ श्रीमद्दाशरथिंप्रणौमि॥ शेषविभूषणमीडे शेषाशेषार्थलाभाय॥ दातुंसकलमभीष्टं फलमीशे यः स्तपादृष्टिः॥१॥ ध्यायमिति। ध्यात्वाध्यात्वेत्यर्थः।
णमुलन्तमेतत्। परं सर्वजगदुपादानम्। कार्यब्रह्महिरण्यगर्भव्यावृत्तयइदम्। ध्यानं चिन्तापरपर्यायं स्मृत्यनुकूलव्यापाररूपं। स्मरणं तु तज्जन्यमिति विशेषः। गुरोरि
त्येकवचनेन सर्वविद्यालाभ एकस्मादेव गुरोरिति सूचितम्। प्रौढानां मनोरमयतीत्यर्थिकां मनोरमां प्रौढत्वं च सकलदर्शनार्थज्ञानपूर्वकमहाभाष्यगूढार्थज्ञानवत्त्वम्।
इण्ग्रहणेष्विति। नन्विदं न्यूनमम् ग्रहणेपि ग्रहणात्। फलं तु बहुपुमक्षिहित्वाहेत्यादौ पुमः खय्यमिति रुत्वम्। गवित्ययमाहेत्यादिषु पदान्तत्वात्ककारादेर्नजश्त्वमिति

श्रीः॥ ध्यायंध्यायंपरंब्रह्मस्मारंस्मारंगुरोर्गिरः। सिद्धान्तकौमुदीव्याख्यांकुर्मः प्रौढमनोरमाम्॥१॥ हयवरट्। हकारोपदेशः अट्अण्हश्इण्ग्रहणेषु
हकारग्रहणार्थः। अर्हेण। अङ्व्यवायेपीति णत्वम्। देवाहसन्ति। भोभगोरिति रोर्यत्वाम्। देवाँहसन्ति। हस्निचेत्युत्वम्। लिलिहिढ्वे। लिलिढ्ढ्वे। विभाषेट इति वाढः।
हल्। इदंसूत्रंवलरलझलशलषु हकारग्रहणार्थम्। रुदिहि स्वपिहि। रुदादिभ्यः सार्वधातुक इति वलादिलक्षण इट्। स्निहित्वा। रलोव्युपधादिति वा
कित्वम्। अदाग्धाम्। झलोझलीति सकारलोपः। अलिक्षत्। शलइगुपधादिति क्सः॥ स्नेहित्वा

चेन्न। सुट्तिथोरित्यादाविकाराद्युच्चारणेन शास्त्राबोधिताजव्यवहितहल्समुदायस्यासाधुत्वबोधनात्। अतएवोच्चैरुदात्त इति सूत्रे भाष्यम्। न पुनरन्तरेणाचं व्यञ्जनस्योच्चार
णमपि भवतीति। स्कोरित्यादिस्तु सौत्रः प्रयोगः। अतएवाटिहकारप्रयोजनकथनावसरे भाष्ये शश्छोटीत्युपन्यस्य तदुदाहरणं नोपन्यस्तम्। हकारपरशकारासम्भवेन शश्छोटीति प्रस
क्तोच्चारितमिति च कैयटेन व्याख्यातम्। अमिहकारप्रयोजनमिति च भाष्येनोक्तमिति दिक्। इदंसूत्रमिति। वलादिप्रत्याहाराश्चरेफेणैव सन्तु। हल्न्त्यमित्यत्रान्योन्याश्रयपरिहारस्तु रत्नं हरि
तिन्यासेनावृत्त्याहर्प्रत्याहारबोधकसूत्रसमुदायान्त्यमिदित्यर्थेन वा सुकर इति भावः। ग्रहणार्थमिति। शषसहरित्येव तु नोक्तम्। खरि हकारग्रहणापत्तौ हरिर्हरतीत्यादौ विसर्गापत्तेः॥

सप्तमीति। अधिकरणकारकस्य कर्त्राद्यन्वयद्वारा क्रियान्वयादस्तिसामर्थ्यमितिभावः। अस्य योगविभागस्य भाष्ये दर्शनादाह। सुप्सुपेतीति। अनेनापि साधनस्यागतिक गतित्वादाह। यद्वेति। हलोहलितिसूत्रस्यान्त्यमितिविग्रह इतिभावः। षष्ठीस्थानइत्यस्य चोदुपधायागोह इत्यादाविव गुणानां च परार्थत्वादितिन्यायेन वाप्रवृत्तिरितिबो ध्यम्। तन्त्रावृत्त्येकशेषान्यतममस्त्विति। यद्यपीदृशेविषये उच्चारयितुस्तन्त्रैकशेषान्यतरेणोच्चारणं बोद्धुस्त्वावृत्त्याबोध इत्येवानुभवसिद्धं तथापि व्यवस्थितेवान्यत मप्रत्तानेन बोध्यत इतिनदोषः। एकशेषश्चप्रत्याख्यातोऽसहविवक्षायामपि शास्त्रमात्रप्रक्रियोपयोगीत्याशयेन पृथगुक्तः॥ सामीप्यंषष्ठ्यर्थ इति। षष्ठीस्थानइ त्यस्य गुणानाञ्च परार्थत्वादितिन्यायेनाप्रवृत्तिः। न चेकोगुणवृद्धी इतिसूत्रेतच्छेषशब्देन परिभाषयोरपि गुणगुणिभाव उक्त इतिवाच्यम्। सार्वधातुकार्धधातुकयो

हलन्त्यम्। सूत्रेन्त्यमिति। हलिअन्त्यमितिविग्रहे सप्तमीतियोगविभागात्सुप्सुपेतिवासमास इतिभावः। यद्वा। षष्ठीतत्पुरुषोयम्। स्यादेतत्। हलि त्येकदेशस्यैव तन्त्रावृत्त्येकशेषान्यतममस्तु । हस्यल् इतिचव्याख्यास्यते। सामीप्यंषष्ठ्यर्थः। यद्वामास्तु तन्त्रादि। अस्तु समाहारद्वन्द्वो हल्चल् चेति। लकारस्य संयोगान्तलोप इति चेन्नैवम्। आद्ये समासस्य क्लिष्टत्वात्। नहि ब्राह्मणस्य कम्बल इत्यादौ ब्राह्मणसमीपवर्ती अन्यदीयः कम्बलः प्रतीयते॥

रलोन्त्यस्यकोगुणवृद्धीतिसूत्रत्रयस्य लक्ष्यसंस्कारकमहावाक्ये विशेष्यविशेषणभावमादायैव तच्छेषव्यवहारो न तु गुणगुणिभावे परस्परापेक्षत्वेनवेतिकैयटेन स्पष्टमुक्तेरेतन्मूलकतयैव तत्सम्भवस्यतेनोक्तेश्चेतिभावः। क्लिष्टत्वादिति। ब्राह्मणस्य कम्बल इत्यादावसत्यपि प्रकरणादौ स्वस्वामिभावादिप्रतीतिवदनन्तरस मीपादिशब्दप्रयोगमन्तरेण सामीप्याद्यप्रतीतेः तस्य षष्ठ्यर्थत्वाभावात्तत्प्रयोगे त्वसामर्थ्यात्षष्ठीसमासाप्राप्तिरिति। मध्यमपदलोपिसमासे सौत्रे वा तत्र समासस्य क्लिष्टत्वमितिभाव स्तदेतदाह। नहीत्यादिना तत्रानिष्ट इत्यन्तेन ॥

चित्रगवीणामिति।कुमतिचेतिणत्वम्।दन्त्यपाठस्तुलेखकप्रमादात्।एवंस्त्रीगवीणामित्येकशेषप्रकरणान्तस्थकैयटप्रयोगेपिबोध्यम्।अस्तेरनन्तरेसमीपेवेत्यादि
भाष्यंत्वनन्तरादिपदाध्याहारेणतन्निरूपितसंबन्धार्थिकास्त्वानपदाध्याहारेणतन्निरूपितसंबन्धार्थिकावाषष्ठीत्यभिप्रायकम्।अतएवमतुप्सूत्रेकैयटेनगावोस्य
सन्त्यनन्तरादूत्यर्थेमतुप्शङ्कापरभाष्यव्याख्यावसरेआनन्तर्यमस्त्यर्थवत्प्रकृत्यर्थोपाधिरित्युक्तम्।नतुतस्यषष्ठ्यर्थत्वेनप्रत्ययार्थत्वमुक्तम्।भाष्यकृताचासामर्थ्यात्त
त्रस्यभावउक्तः।षष्ठ्यर्थत्वेतुप्रत्ययार्थत्वात्कासामर्थ्यम्।तस्माद्यत्रषष्ठ्यन्तमात्रप्रयोगेआनन्तर्यादिप्रतीतिस्तत्रानन्तरादिपदाध्याहारएवबोध्यः।तत्रास्तिग्रहणाभावेत
सान्यफलकत्वेवासूत्रानुपातास्त्यर्थान्तर्भावेणमत्वर्थीयवद्बहुव्रीहिवच्चतथाभूतानन्तर्याद्यर्थान्तर्भावेणचित्रागावोस्यसत्यनन्तरास्त्याद्यर्थेबहुव्रीहिमत्वर्थीयौनभ

नवाचित्रगुशब्दाच्चित्रगवीणांसमीपवर्तीरक्षादिःप्रतीयते।अतएवानन्तरादिषुनसमासोनभिधानादितिस्पष्टमा
करे।किंबहुनाब्राह्मणस्यकम्बलश्चित्रागावोस्येतिव्यस्तप्रयोगोपितत्रानिष्टः।द्वितीयेपिसंयोगान्तलोपोदुर्लभोयणःप्रतिषेधा
रम्भात्।तत्वत्याख्यानपक्षेपिझलोझलीत्यतोझल्ग्रहणमपकृष्यसंयोगान्तस्यझलोलोपविधानाच्च ॥

क्तोनभिधानादितिमतुप्सूत्रेभाष्येस्पष्टम्।अनन्तरादेरिदमर्थत्वेतस्येदमितिशैषिकोप्यनभिधानान्नेतितस्येदमित्यत्रभाष्ये।तदुक्तमनन्तरादिषुनसमासोनभिधा
नादितिस्पष्टमाकरइति।तत्रसमासग्रहणंतद्धितवृत्तेरप्युपलक्षणम्।अनन्तरादिशब्दैःषष्ठीतत्पुरुषादिस्तुभवत्येव।ग्रामकूपोगङ्गातीरमित्यादौसमीपएवाव
येयत्वारोपेणसमासः।स्पष्टाचेयंरीतिर्मिपर्यन्तस्येतिसूत्रेकैयटे।किंचहस्यलित्यर्थेहलिलिलेखनइतिधातोर्लसेत्वापत्तिः।नचफलाभावोदेवदत्तहलित्यादौडित्व
सामर्थ्यादभस्यापिटेर्लोपवल्लित्वसामर्थ्यात्प्रत्ययात्पूर्वत्वाभावेपिलित्स्वरस्यैवफलत्वंवक्तुंशक्यमित्यपिबोध्यम्।यद्यपिहलसीरादितिनिर्देशेनतस्यनेत्वमितिक
ल्पयितुंशक्यम्।तथापिज्ञापकस्वीकारापेक्षयासूत्रवृत्तिरेवलघीयसीतिदिक्।झलोलोपेति।सौत्रलोपाश्रयणेतुमूलोक्तमेवलघु ॥

असंभवादिति। नचाद्यन्तौटकितावित्यादौ यथासंख्यमन्वयेऽपि प्रथमतः साहित्यावच्छिन्नेसाहित्यावच्छिन्नान्वयमात्रेण सहविवक्षामाश्रित्य यथाद्वन्द्वसाधुत्वं तथेहापि प्रथमतो लकारो हल्पदवाच्यश्चेदिति सामान्यतो बोधं कल्पितमादाय द्वन्द्वसाधुत्वं ततो विशेषजिज्ञासायामादिरन्त्येनेत्येकवाक्यतया विशेषतो वाक्यार्थो लक्ष्यसंस्कारकः। किं च सहविवक्षा सहवक्तुं वक्तुरिच्छा, सा च सूत्रप्रणयनानुपपत्त्या पाणिनेस्ततः पूर्वमपि हल्पदार्थज्ञानादस्त्येव, बोध्यबोधस्तु क्रमेणैवेति वाच्यम्। आद्यन्तावित्यादौ यथासंख्यसूत्रारम्भसामर्थ्येन तथा साधुत्वाङ्गीकारेऽप्यन्यप्रकारेण तस्य धुंसोलकल्पने मानाभावात्। किं च श्रोतॄणां सह बोधो भवत्वितीच्छया सह वक्तुमिच्छाया एव सहविवक्षात्वेन श्रोतॄणामपि सह बोध एवोचितः। सा दृशेच्छया तेषां तादृशबोधाजनकशब्दप्रयोगे तु पाणिनेर्भ्रान्तत्वापत्तिः। मुखं नयनं पश्येत्यादौ तु न दोषः। उभयज्ञत्वेन ज्ञाते प्रत्येव तादृशशब्दप्रयोगात्तेन रूपेण ज्ञानं भ्रमः प्रमा वेत्यन्यदेतत्। किं च पाणिनेः पूर्वं हल्पदार्थज्ञानेऽपि तदभिप्रायेण न प्रयोगः। अन्यथा व्याख्यातृपरम्परावगतवक्तृतात्पर्यानुपपत्त्या लट्स्मे इति सूत्रस्थकैयटोक्तरी

किं च पदार्थबोधं विना वाक्यार्थबोधासंभवेन हल्प्रत्याहारसिद्धेः प्रागेतत्सूत्रार्थाबोधे प्रसक्ते तदुद्धारार्थेयं पत्तः। अस्यां चावस्थायां हल्शब्दार्थाप्रसिद्धेर्द्वन्द्वस्य दुर्लभः। सहविवक्षाया असंभवात्। तस्माद्यथोक्तमेव न्याय्यम्॥ ७) स्यालक्षणया तन्त्रान्तरीयप्रथमादिव्यवहारेण प्रथमादिपदानामिव शक्त्यनुमानाद्धा। ततः श्रोतॄणां बोधसंभवेनेतरेतराश्रयस्यैवाभावे तदाश्रङ्कालश्चेति वक्तव्यमित्यादिसमाधानपरभाष्यासङ्गत्यापत्तेः। नचैवमजादिव्यवहारस्यापि लक्षणादिनैवोपपत्तावादिरन्त्येनेति सूत्रं वैयर्थ्यम्। क्वचिल्लक्षणादिना बोधदर्शनेऽपि सर्वत्र लक्षणाद्याश्रयणमेवेति नियमाभावात्। नासूया कर्तव्या यत्रानुगमः क्रियत इति पङ्क्तिं विंशतीति सूत्रे भाष्योक्तेः। तस्मात्करिष्यमाणशक्तिग्रहोपायकपदस्य तदभिप्रायेणाचार्यस्य पूर्वं प्रयोग इत्येव। अल्पनान्त्यायमौ। ध्वनिनश्चायमर्थो नाज्झलाविति सूत्रेऽष्टादशानां ग्रहणाभावाय वर्णानामुपदेशस्तावत् उपदेशोत्तरकाले त्संज्ञा इत्संज्ञोत्तरकालः प्रत्याहारः प्रत्याहारोत्तरकाला सवर्णसंज्ञा तदुत्तरकालमणुदिदिति सवर्णग्राहकमित्येतेन समुदितेनान्यत्र सवर्णानां ग्रहणं भवति न त्वस्मिन्नपि स्वाङ्गे इत्येवं वाक्यपरिसमाप्तिप्रतिपादकभाष्येणापि। अन्यथा तत्सूत्रप्रणयनानुपपत्त्या पाणिनेस्तथात्वात्तस्य पूर्वमपि सत्त्वेनाचार्येण तथा प्रयोगे बोद्धॄणाम विक्रमेण तथा बोधे उपपन्ने किं तेन कृतं स्यात्। कथं वा नाज्झलावित्यत्राष्टादशादीनां ग्रहणवारणं भाष्योक्तं सङ्गतं स्यादिति विभाव्यतां तदाह। तस्मा

६८

आद्यन्ताभ्यामिति। अवयवत्वेन बोधकाद्यन्तशब्दाभ्यामित्यर्थः। तस्य समुदायस्य। तयोः पारार्थ्येति। सञ्ज्ञास्वरूपबोधकतया शक्तिग्रहकालएव तयोः पारार्थ्यनिर्णयादित्यर्थः। परामर्शि
त्वादिति। वस्तुतो ज्ञापकादिनाऽग्यापि न सञ्ज्ञाकार्यमाद्यन्तशब्दाभ्यामाद्यन्तघटितसमुदायस्याक्षेपेणान्येषामिव तयोः प्राप्तायाः सञ्ज्ञायाः प्रकारान्तरेणाशक्यवारणत्वात्। स्वशब्दानु
वृत्तेश्च न फलम्। भाष्येपि एतत्फलितार्थकथनमेव। स्वस्य च रूपस्येति। सञ्ज्ञास्वरूपत्वविशिष्टस्यास्तु प्रत्येकं स्वबोद्ध्यत्वं चास्तु को विरोधः। यथाच्च घेरित्यादौ गुणदर्शनेन घिश
ब्दस्यापि घिसञ्ज्ञाबोद्ध्यत्वं तद्वदे वमजादिसञ्ज्ञास्वसञ्ज्ञिघटकेकारादिष्विवाकारचकारयोरपि प्राप्नोत्येव। किं च स्वशब्देन केवलान्त्यपरामर्शासंभवेपि विशिष्टपरामर्शे
न बाधकं तत्र समुदाये फलाभावादवयवयोर्विश्रान्तिं प्राप्स्यति। तस्मात् ज्ञापकादिनैवान्त्यस्य तत्कार्यं वारणीयमित्यलम्। भाष्येति। तत्रहि उपदेशइति किमभ्रँ अपः
मद्भ्यगानामिति। आद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय आक्षिप्यते। तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवेअवतरन्ती सञ्ज्ञा मद्ध्यमेषु विश्राम्यति। नत्वा
द्यन्तयोः। संज्ञास्वरूपान्तर्भावेण तयोः परार्थ्यनिर्णयादिति भावः। स्वस्य चेति। स्वं रूपमित्यनुवृत्तेः स्वरूपं चादेरेव गृह्यते नान्त्यस्य। अन्त्येनेत्यप्रधानतृतीयानि
र्देशात्। सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात्। आद्योच्चारणमिति। यद्यप्युपदिश्यते ऽनेनेति करणव्युत्पत्त्या शास्त्रमुपदेश इति भाष्यवृत्त्यादिषु व्याख्यातं तथापि
तत्प्रौढिवादमात्रम्। करणे घञो दुर्लभत्वात्। ल्युटा बाधात् ॥ ७ प्रत्यस्समाख्यानमुपदेशो गुणैः प्रापणमुद्देश इति नासावुपदेश इत्युक्तोपदेशोद्देशयोर्लौकव्यवहारेण
संकीर्णत्वमाशङ्क्योपदेशनेऽजनुनासिक इति वार्त्तिककृद्दर्शितन्यासस्य खण्डनायोपदेश इति करणे घञुपदिश्यतेनेनेत्युक्तं तच्च शास्त्रं शासनकरणं प्रत्यासत्त्यै तच्छा
स्त्रीयधात्वागमप्रातिपदिकप्रत्याहारसूत्रप्रत्ययादेशरूपम्। प्रौढिवादमात्रमिति। वार्त्तिककृदुक्तन्यासीयार्थस्य कथंचित्सूत्रतोपि लाभसंभवात् न्यासान्तरप्रवृत्तिस्ते
ष्वेवेति प्रौढ्या बोधयितुमेवं वाद इति भावः। घञ इति। अकर्त्तरि चेत्यत्र सञ्ज्ञायामित्यस्य प्रायिकत्वात्तत्प्राप्तिरिति भावः। बाधादिति। वासरूपविधिस्तु क्तल्युट्तुमुन्खलर्थेषु प्रति
षिद्धः। न च तत्र साहचर्येण भावल्युट एव ग्रहणमिति वाच्यम्। ईषत्पानः सोमो भवतेत्यत्र कर्मणि खलनेति भाष्यादिप्रामाण्येनात्र साहचर्यानाश्रयणादिति भावः ॥

क्लिष्टत्वादिति। गुणप्रधानसन्निपाते प्रधानस्य विशेषणे साकाङ्क्षत्वेद्‌तरान्वयस्तस्यायुक्त इति क्लेशद्‌ निभावस्तदाह। नहीत्यादिना। भाष्यकृतेति। अस्यार्थस्येति शेषः। एवंचोभयप्राप्तौ कर्मणीति नियमान्न कर्तरि षष्ठीति बोध्यम्। अवहेलनाच्चेति। चो हेतौ। यतोऽवहेलनमतः क्लिष्टत्वमित्यर्थः। घापवाद इति। ल्युडपवादश्चेत्यपि बोध्यम्। तत्रापि संज्ञायामित्यनुवृत्तेरिति भावः। अगतिकगतिरिति॥ नचखनो घ चेति घविधानमन्यतोऽपीत्यर्थमित्याकरे स्पष्टं तेनात्र घे सिद्धतीति वाच्यम्। तस्यापि अगतिकगतित्वात्। भगः पद्‌मित्यादौ चत्वाऽपित्वफलं तन्नैवतत्प्रवृत्तेश्च॥ पदस्य घञर्थे केन सिद्धेर्नैतदुदाहरणं किंतु क्वाचित्कं वा कंचतत्। किंचोच्चार्य वर्णानाहोपदिशद्‌ मे वर्णा इत्यादिभाष्यादुपदेशब्दस्योच्चारणार्थत्वस्य निर्णयेन संकीर्णलोकव्यवहारस्यलक्षणयाप्युपपत्त्याऽनवघञि बाधकाभावः। किंचोपदेशशब्दस्य प्रत्ययादिपरत्वे तस्यैव हलन्त्यमित्यत्रान्वयेन यत्किंचित्समुदा

नचघः। असञ्ज्ञात्वात्। प्रायेण सञ्ज्ञायामिति व्याख्यानस्य क्लिष्टत्वात्। नह्युपाधेरुपाधिर्भवतीत्यादिना भाष्यकृताऽवहेलनाच्च। अतएव घापवादो हलश्चेति घञपीहन। बाहुलकं त्वगतिकगतिः। अतएव प्रक्रियन्ते शब्दा आभिरिति करणव्युत्पत्तिरपि परास्ता। तथाच वार्त्तिकम्। अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेनेति। अतो भाव एव प्रत्ययो न्याय्य इति भावः। यत्तु धातुसूत्रेत्यादि पठन्ति। यच्च व्याचक्षते। करणव्युत्पत्त्या पूर्वोक्तोपात्तानामुपदेशत्वम्। कर्मव्युत्पत्त्या त्वागमादीनाम्। वर्णादिलिङ्गानुशासनयोरपि सूत्रत्वात्सिद्धे पृथगुपादानं गोबलीबर्दन्यायेन। एवंगणत्वादेव सिद्धे धातोरपीत्यादि। अत्रेदं वक्तव्यम्। किमेषामुपदेशसञ्ज्ञा उत योगमात्रम्।

यान्त्यस्य वारणं संभवेत् तदर्थमन्त्यग्रहणसामर्थ्यादिवर्णनक्लेशो भाष्यकृतोऽव्यर्थ इत्यादि निबोद्ध्यम्। उद्देशश्च प्रातिपदिकानां नोपदेश इत्यादेश्च उपदेशो इति सूत्रे च भाष्ये भावघञन्तस्यैव तस्या

दीकारश्चेति दिक्। धातुसूत्रेत्यादीति। धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्। आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिता इत्यर्थः॥ उपदेशत्वमिति। उपदेशशब्दव्यवहार इत्यर्थः। धातोरपीति। प्रत्ययेभ्य उणादेरपीत्यपि शब्दार्थः। वाक्यशब्देन वार्तिकं शीङ्‌ लण् चोरट् उण् आचारे। खगल्भ पुट् अण् अनङ् इत्युदाहरणानि। उपदेशसञ्ज्ञेति। उपदेशपदं योगरूढमेवेति भावः

ननु संज्ञाशब्देन व्यवहार एवाभिमतोऽत आह। आमइत्यादि॥ नचाकारोच्चारणंव्यर्थम्। तेनास्मत्पक्षज्ञापनस्यैवौचित्यादितिभावः। आदिनायकारादीचुञ्चुप्चणपावित्यादिसंग्रहः॥ उपदेशाभावादिति॥ आदेशस्योपदेशाभावादित्यर्थः॥ ततोधातुसञ्ज्ञेति॥ लूशब्दएवधातुसञ्ज्ञः केवलमसौ ञित्कार्यंलभतइतिभावः॥ नन्वत्रसूत्रसाहचर्याद्वैत्वागमप्रेस्यपादिशब्देनतद्बोधकपाणिन्यादिपठितानुपूर्वीकाणांग्रहणम्॥ तेषांधात्वादिव्यवहारस्तुभाविसञ्ज्ञाविषयघटितत्वेनधातुपाठइत्यादिव्यवहारवदितिचेन्नोभावुच्चारणविषयाणामित्यवसिद्धेएतस्यानुपयोगात्॥ अतएवचारुचेराह॥ अपिचेति॥ अलोन्त्यात्सूत्रेति। उपधासञ्ज्ञासूत्रेत्यर्थः। विरुद्ध्येतेति॥ तत्रहिलोपनाद्यः। संज्ञा याः शास्त्रकारैरनुक्तेः। असञ्ज्ञात्वात्घप्रत्ययोनेतिभाष्योक्तेश्च। अस्मदादिकृतसञ्ज्ञायाः शास्त्रव्यवस्थापकत्वेऽतिप्रसङ्गाच्च। आमोमित्वमदन्तत्वादितिस्वपरग्रन्थविसेधाच्च। नह्युत्सृष्टानुबन्धस्यामोनप्रत्ययत्वंयेनमित्त्वंनभवेत्। किंचैवंप्रत्ययविधौपञ्चम्याः प्रकल्पकत्वेसनःसनेवआदेशोऽस्त्वित्याशङ्क्योपदेशाभावादित्सञ्ज्ञानस्यादितिभाष्यकैयटोक्तंव्याकुप्येत। किंचनधातुलोपइतिसूत्रेधातुग्रहणंकिंलूञ्लविता पूञ्पवितेतिभाष्यमुपदेशएवानुबन्धलोपेकृतेततोधातुसञ्ज्ञेत्येवंपरः कैयटग्रन्थश्चविरुद्ध्येत। अपिचघ्वसोरेद्धाविति सूत्रेलोपश्चेतिद्विशकारकोनिर्देशः। द्वितीयः शकारइदितिअलोन्त्यसूत्रस्यभाष्यकैयटादिकमपिविरुद्ध्येत। नद्वितीयः। योगस्यैवपुरस्कारेपरिगणनस्यव्यर्थत्वात्। धात्वादिषुकरणव्युत्पत्तिरागमादिषुनेतिवैषम्यस्यदुरुपपादत्वाच्च ॥

शितिभिन्नंपदंशितिच॥ पूर्वस्यश्रुतत्वेनशः। असंदेहायझल्परसंयोगादित्वेपिस्कोरित्यस्यनप्रवृत्तिः। झलांजशित्यादौजश्त्वस्यैव॥ शकारस्यधात्वाद्यन्तत्वाभावः स्पष्टएवेतिभावः। किंचनमोवरिवश्चित्रङ इत्यस्यासंग्रहोत्रपक्षेइत्यपिबोध्यम्। एषतस्ययोगरूढिरित्युक्तेः परिगणनताया एवलाभात्॥ योगस्यैवेति। नतुरूढेरित्यर्थः। परिगणनस्येति। धात्वादिगणनस्येत्यर्थः। वैषम्येति। भाष्यरीत्याकरणव्युत्पत्त्यैवसर्वसंग्रहादितिभावः ॥

उपदेशताप्रयोजकेति। योगमात्रस्वीकारे उपदेशता उपदेशकरणतानहितत्प्रयोजकं धातुत्वादि भवतीति नद्विरोधः। सञ्ज्ञात्वे तु उपदेशता उपदेशशब्दत्वम्। उपदेशशब्दस्य शब्दपरत्वा
त्तेनतदवच्छिन्नस्य प्रयोजकं तु रूढ्यर्थतावच्छेदकतया धातुत्वादि वक्तुं शक्यमिति भावः॥ शकारस्येति॥ नह्यनेन किंचिदुपदिश्यत इति भावः॥ ननूपदिश्य नेत्ज्ञाप्यते। नेनेति तदर्थः। धात्वा
दिभिर्हि प्रयोगो ज्ञाप्यते तद्वदनेनापि शकारेण सर्वादेशत्वं ज्ञाप्यत इत्यरुचेराह॥ आदेवइति॥ सर्वैति। भाष्यकारादीत्यर्थः॥ यत्र तु करणव्युत्पत्त्यैवार्थसंगतिस्तत्रागत्यास्तु कृत्यल्युट इति
बोद्धुलकान्ल्युडभावः। यथा यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्ताविव्यादाविति दिक्॥ नासिकामनुगत इति। नासिकामभिहत्य वायुनाऽभिव्यञ्जित इत्यर्थः॥ प्रातिशाख्यशिक्षादौ लोके
तद्व्यवहारस्य तथैवोपपादनमावश्यकमिति तात्पर्यम्। अतस्त्वमुखग्रहणप्रत्याख्यानभाष्यध्वनितो यमानुस्वारयोरनुनासिकव्यवहारः सूत्रमते संगच्छते॥ यरोनुनासिक इत्यादौ स्वरूप

उपदेशताप्रयोजकधातुत्वादिरूपोपाध्यवच्छिन्नसमुदायान्त्यहलिदित्यर्थ इति स्वग्रन्थविरोधाच्चापत्तइयेपि लिङ्गानुशासनस्य प्रकृतानुपयोगात्। लोपश्चेति श
कारस्यासंग्रहाच्च। आदेच उपदेशे उपदेशेत्वत इत्यादावाद्योच्चारणस्यैव उपदेशपदार्थतायाः सर्वसंमतत्वाच्चेति दिक्। उपदेशेजनुनासिक इत्॥ यद्यप्यत्रोपजीव्यत्वा -
दनुनासिकसञ्ज्ञा प्रथमं वक्तुमुचिता तथापि नासिकामनुगत इति योगाश्रयणेनैव गतार्थत्वादनुनासिकसञ्ज्ञासूत्रं मन्दप्रयोजनमिति ध्वनयितुं नेहोपन्यस्तम्।
उपदेशे किम्। अभ्र आँ अपः। यद्यपीह उञ ऊँ इत्यत्रेव विधानसामर्थ्यान्नेत्वमिति सुवचम्। तथाप्युत्तरार्थमवश्यं कर्तव्यमुपदेशग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम्। अच्
किम्। [illegible]निनो मकारस्य माभूत्॥ ॐ ग्रहणाभावस्तु पशुरपस्यमित्यादिवदिति ध्येयम्। मन्दप्रयोजनमिति॥ मन्दे तु प्रयोजनमस्येति बहुव्रीहिः। एवंविधयोगलोकप्रातिशाख्याद्यनभि
जं पुरि सप्रयोजनमित्यर्थः॥ अभ्र आँ अप इति। अत्रेत्सञ्ज्ञायां लोपः स्यादिति भावः। विधानेति॥ इदिति वक्तव्ये अनुनासिकविधानसामर्थ्यादित्यर्थः। नेत्वमिति॥ तत्फललोपस्य सामर्थ्याद्भावे
इत्त्वमा[illegible]फलाभावान्नेत्यर्थः॥ नन्वभ्र आँ अ टित इत्यत्रानेकान्ता अनुबन्धा इति पक्षे आदितश्चेतीट्प्रतिषेधः फलम्। न च लोपाभावे इदिति महासञ्ज्ञाकरणात्तज्ज्ञापिनेति वाच्यम्। महास
ञ्ज्ञयैव लोप[illegible] सिद्धान्तस्य लोप इत्यस्य वैयर्थ्यापत्तेः। इक इत्यादौ ककारादिश्रवणानापत्तेश्चेति चेन्न। अनुबन्धानामेकान्तत्वमेवेति मुख्यपक्षे दोषाभाव इत्याशयात् तदाहि मुख्येव यत्विन्यन्यपदार्थे

प्रतिज्ञेति। प्रतिज्ञान्तविषयइत्यर्थः। प्रतिज्ञाशब्दस्येति॥ भावाङन्तस्येत्यर्थः॥ क्लिष्टेति॥ शक्तिग्राहकव्याकरणसत्वाच्छक्त्यैवतदर्थबोधसंभवे लक्षणाश्रयणं क्लेशइतिभावः॥ लक्षणं॥ विनिवर्तते॥ अत्रलक्षणया व्याख्यानं कुर्वतापि तत्रलक्षणां विनामदुक्तरीत्यैवव्याख्यातमेवं च पूर्वापरविरोधस्तस्येतिभावः। नचोभयोर्विधानेपि लाघवाद्भावे शक्तिः कर्मणि लक्षणा अनुशासनमपि ला[illegible]णिकार्थानुशासनमेवेतिवाच्यम्। लः कर्मणीत्यादीनामपि तथात्वापत्तौ तिङां कर्त्रादौ शक्तिरिति सिद्धान्तासङ्गत्यापत्तेः। व्याकरणस्याभियुक्तोक्त शक्तिग्राहकत्वस्य भङ्गापत्तेश्च॥

प्र[illegible]तोपन्नइति प्रतिज्ञा। आतश्चोपसर्गइति कर्मण्यङ्। प्रतिज्ञा आनुनासिक्यं येषामिति विग्रहः। एवं च प्रतिज्ञा समधिगम्येप्रतिज्ञाशब्दस्य लक्षणेति क्लिष्टं व्याख्यानं[illegible]पणीयम्। पाणिन्युपज्ञं व्याकरणमित्यादिष्विव लक्षणां विनैव निर्वाहात्। यद्यपि सूत्रकारकृतोनुनासिकपाठ इदानीं परिभ्रष्टस्तथापि वृत्तिकारादिव्यवहारबलेन[illegible]कार्यं प्राक्स्थित इत्यनुमीयत इतिभावः। ननु रलयोरिति न्यूनम्। टकारस्यापि मद्यगत्वादित्यत आह। प्रत्याहारेष्विति। व्यवह्रीयन्त इति। प्रत्याह्रीयन्ते संक्षिप्यन्ते वर्णा यत्रेति बाहुलकादधिकरणे घञ्। यद्यपि योगमात्रमकारादिसञ्ज्ञास्वतिप्रसक्तं तथापि योगरूढिरितिभावः। प्रत्याहाराश्चैकचत्वारिंशदिति प्राञ्चः। चतुर्दशसूत्रीस्थैर्हल्भिरिद्भिः कृता अष्टाध्याय्यां व्यवहृता एकचत्वारिंशदिति तस्यार्थः। तेन सुप्तिङादीनां प्रत्याहारस्य च यो द्वितीयादिनिर्वार्तिकस्य — चयप्रत्याहारस्य चाधिक्येप्यदोषः। यत्तु यमन्ताङ्ग इति यमिर्यमनेष्वनिडेकइष्यत इति च यम् वार्तिककृताव्यवहृत इत्याहुः तद्भ्रमसाभिधानम्। आयस्थोणादिसूत्रत्वात्। द्वितीयस्य व्याप्रभृति[illegible]कास्यत्वादि[illegible]तावत एव च संख्यानियमो नातीवोपयुज्यत इत्युपेक्षितः। ऊकालोच्। ह्रस्वदीर्घप्लुत इति समाहारद्वन्द्वः। सौत्रं पुंस्त्वम्॥

टकारस्यापीति। अत्रमद्दक्तव्यं तदन्यत्रोक्तम्। बाहुलकादिति। भावघञन्तादर्श आद्यजित्यपि बाहुलकाद्विशिष्टमिति भावः। एकचत्वारिंशदिति॥ एकस्मान्ङञणवटा द्वाभ्यां षड्भ्यश्च कणमाः स्युः। ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्य इति तदुक्तेरितिभावः॥ सौत्रं पुंस्त्वमिति। यद्यपि इतरेतरयोगेपि सौत्रमेकवचनं वक्तुं शक्यं तथापि लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति तत्र तत्र वार्तिकोक्तेर्लिङ्गस्य लौकिकत्वात्तद्व्यत्ययकल्पनमेवोचितं न तु शास्त्रीयवचनव्यत्ययकल्पनमिति भावः॥

फलितार्थीति। ऊपदेनस्वोच्चारणकालसदृशलक्षणयाकालशब्देनसमानाधिकरणबहुव्रीहिरितनफलतीतिभावः। वांकालइतितुनविग्रहोव्यधिकरणत्वात्तदाह। विग्रहस्त्विति। काल
इतिजात्याख्यायामेकवचनम्। स्वोच्चारणकालइति। स्वोच्चारणकालसदृशइत्यर्थः। सादृश्यमूलके कालयोरभेदाध्यवसायेतुयथाश्रुतमेवसाधु। फिट्स्वरेणेति। अन्तोदात्त इत्यर्थः।
[illegible]ः सुप्त्वादनुदात्तत्वम् अस्मादेश उदात्तेनेत्येकार उदात्तइतिभावः। अनुदात्तइति। फिट्स्वरेणान्तस्योदात्तत्वेशेषनिघातेनेतिभावः। अभिमुखवाच्यमुत्पन्नंप्रातिपदिकमर्वाङिति
[illegible]विवक्षितमित्यर्थइति। [illegible] प्रातिशाख्ये [illegible] पाक्तिकोदाहरणविषयम्। ननूनपाच्छचीपतिशब्दयोरिति। अस्ययद्यपीत्यादिः शेषनिघातइति।
वाकालइवोति। फलितार्थकथनमिदम्। विग्रहस्तु [illegible] कालोयस्येतिबोध्यः। ऊशब्देनस्वोच्चारणकालोलक्ष्यते। आयइति। निपाताआद्युदात्ताइतिआकारउदात्तः। यच्छब्दस्तु
फिट्सूत्रेणाभर्वाङ्। अकारोनुदात्तः। तस्मात्इतः। अतन्त्रमिति। उपेपिवानित्यत्रउपसर्गइवाविवक्षितमित्यर्थः। ननुतत्रईयिवांसमतिस्रिध इत्यादिप्रयोगदर्शनादविवक्षा
स्तु इह [illegible] किमितिचेत्लक्ष्यदर्शनंप्रातिशाख्यादिकंचेतिगृहाण। तथाहि। येराइत्यत्रस्कारः। ननूनपाच्छचीपतिमित्यत्रपदपाठेऊरीतौचार्धोदात्तौइतिसकलब-
हृचसंमितम्। ननूनपाच्छचीपतिशब्दयोरुमेवनस्पत्यादिषुयुगपदितिपूर्वोत्तरपदयोरनुदात्तत्वेकृतेअनुदात्तंपदमेकवर्जमितिशेषनिघातः। पूर्वपदभूतयोस्तनूशचीरत
योरुक्तं [illegible] स्वरितत्वंप्रातिशाख्येउक्तम्। जात्यवत्तानथावान्तौननूशचीतिपूर्वयोरिति। तथास्वरितार्धस्योदात्तत्वंप्रातिशाख्यमपि। एकाक्षरसमावेशेपूर्वयोः स्वरितः स्व
[illegible] उदात्तादर्धमात्रार्धमेववा १ अनुदात्तः परः शेषः सउदात्तश्रुतिर्नचेत्। उदात्तंवोच्यते किंचित्स्वरितंवाक्षरंपरमिति ॥ अस्यतथापीतिशेषः। तेनोदात्तोअ
नुदात्तोप्रश्रुतइतिभावः। जात्यवदेति। पूर्वपदभूतयोस्तनूशचीशब्दयोरन्तोजात्यवदिति। अतोऽन्यत्स्वरितंस्वारंजात्यमाचक्षतेपदइतिलक्षितोजात्यः। उदात्तस्वरितपूर्वस्वरि
तादन्यएकपदेस्थितः स्वरितोजात्यइतितदर्थः। तेनतुल्यंतद्वत्अस्यान्तउदात्तश्रुतिकइत्यर्थः। तथावाअसंहितवद्वावासंहितवद्वेत्यर्थः। पद्यादीस्तु[illegible]तानामसंहितवद्दु
नराणिरन्तरमस्यपाठात्असंहितवदित्यनेनकेवलमनुदात्तत्वम्। संहितवदित्यनेनार्धानुदात्तस्वरितत्वमितितद्भाष्येस्पष्टम्। तथेति। लक्ष्यदर्शनवत्प्रातिशाख्यमपिप्रमाणमस्तीत्य

स्वतन्त्रोदात्तापेक्षयेति। श्लोके उदात्तादितिस्वतन्त्रोदात्तादित्यर्थकमितिभावः। एवकार इति॥ तच्छाखायांदीर्घादिष्वपिसमांशोदात्तकस्वरितस्यैवपाठादितिभावः। एतेनैतं।
पूर्णमित्यस्यकाविल्पास्तंवाशब्दस्तुपादपूरणायेतिबोध्यम्। अप्राकृतइति। स्वरितविशेषइत्यर्थः। स्वारइति॥ स्वरएवस्वारः स्वार्थेण्। स्वरितोदात्ताभ्यांपूर्ववर्णग इत्यर्थः।
लक्ष्यते। तदुक्तंभाष्ये। अर्द्धह्रस्वशब्दोर्द्धमात्रापरः इति। हरिरप्याह। प्रमाणमेवह्रस्वादावनुपात्तंप्रतीयइति। अनुपात्तमपिअर्द्धमात्रारूपंप्रमाणमेवोपलक्ष्यतइ

र्थः। पूर्वयोरुदात्तानुदात्तत्वयोरेकत्रसमावेशेसतिस्वरितोबोद्धव्यः। तस्यस्वरितस्यस्वतन्त्रोदात्तापेक्षयोदात्ततरः। अर्द्धमात्राबोद्धव्येति। कवोऽश्वाइत्यादिह्र
स्वाभिप्रायमर्द्धवेतिदीर्घाभिप्रायम्। अनेनैवह्रस्वस्यापिसंग्रहाद्व्यापकत्वादिदमेवादर्तव्यमितिसूचयितुमेवकारः। अनुदात्तइत्यादिपरिशेषसिद्धार्थ
कथनम्। शेषेऽनुदात्तश्रुतिः स्यात्। किमविशेषेणेत्याह। नचेत्यादि। उदात्तस्वरितपरंविहायेत्यर्थः। शाकल्योऽप्याह। अप्राकृतस्तु यः स्वारः स्वरितोदात्तपूर्व
गः। उदात्तायार्द्धमस्यावशिष्टंनिघ्नन्तिकम्पितमिति। उदात्ताय उदात्तंकर्तुंअर्द्धह्रस्वशब्देनअर्द्धमात्रालक्ष्यतइतिहरदत्तादिग्रन्थास्तुमतान्तरपरतयाकथं
चिन्नेयाः। क्वेति। किमेतत्तिस्वरितम्। वइति। अनुदात्तंसर्वमपादादावित्यधिकारादनुदात्तम्। अश्वाइति। अशेः क्वनिनिनित्स्वरेणाद्युदात्तंसंहितायांत्वे
कोदेशउदात्तेनोदात्तइत्योकारउदात्तः। येअराइति। इयमपिफिट्सूत्रेणान्तोदात्तम्। एकादेशस्तुपक्षेस्वरितः। स्वरितोवानुदात्तेपदादावित्युक्तेः। मुखंचना
सिकाचेतिविग्रहेप्राण्यङ्गत्वादेकवद्भावेमुखनासिकमितिस्यादतआह। मुखसहितेति॥ तुल्यास्य॥ आस्येभवमास्यंशरीरावयवाद्यदित्यभिप्रेत्याह। तात्वादीति ॥

लक्ष्यतस्यहेलाराजआह। एवंचलोकेन्यशाखासुचदीर्घादिष्वप्यर्धमात्रैवोदात्तेतिभावः। मतान्तरेति। प्रातिशाख्योक्तमतापेक्षयेतरवेदलोकसाधारणमतान्तरेत्यर्थः। कथंचि
दिति। लक्ष्यतइत्यंशपरमिदंभाष्यतोरूढिशक्तेरेवप्रतीतेरितिभावः। इत्युक्तेरिति। नोदात्तस्वरितोदयमितिनिषेधस्तुउदात्तादनुदात्तस्येत्यस्यैवानन्तरस्येतिन्यायादितिभावः॥ आस्यश

प्रशब्दबलादिति॥ प्रकृष्टो यत्नः प्रयत्नः प्रकर्षश्च वर्णोत्पत्त्यव्यवहितप्राक्कालिकत्वरूप इति भावः॥ चकारेणेति॥ अत्र यथा नासिकायाः स्थानत्वं तथान्यत्र निरूपितम्
मतुतत्काले ति॥ एतां शिक्षानुक्तार्थानुवादत्वेनात्र शास्त्रप्रवृत्त्यभावादिति भावः॥ नासिद्धं स्यादिति॥ ननु श्रमो धुङ् मानित्यादौ पत्वजश्त्वानुनासिके षु अप्राप्तो न स्यात् न
मतिदेशान्तर वद त्रापि त्रिपाद्यां प्रवृत्तेन दोषः। सपादसप्ताध्याय्यामपि पूर्वं प्रति परासिद्धत्वापत्तेः॥ मध्ये पाठस्य विप्रतिषेधसूत्रस्य च सामर्थ्याश्रयणे तु विनिगमनावि

आभ्यन्तरेति॥ एतच्च प्रशब्दबलाल्लभ्यते। तुल्यास्यं किम्। तर्प्तुं। अत्र पकारस्य तकारे परे झरो झरीति लोपो मा भूत्। प्रयत्नग्रहणं किम्। वाक् श्च्योतति। शस्य
लोपो न। ञमङणनानामिति। नासिका चेति चकारेण स्वस्ववर्गानुकूलं तालव्यादि समुच्चीयते। अनुस्वारोत्तमा अनुनासिका इति तैत्तिरीयाणां प्रातिशाख्यम्। य
मानुस्वारनासिक्या नासिका अनुनासिकाश्चेति माध्यन्दिनकात्यायनप्रातिशाख्यम्। वर्गोत्तमा ञ मङ णना अनुनासिका भवन्ति च शब्दात्स्वस्थानाद्यपरित्यागेन
नासिकास्थानं द्वितीयमेषामित्यर्थ इति तद्भाष्यं च। एदैतोरित्यादौ तपरत्वमसंदेहार्थं न तु तत्कालग्रहणार्थम्। तेन प्लुतस्यापि संग्रहः॥ पूर्वत्रासिद्ध
म्। अयं यस्तत्रोविधिः स्यात्तर्हि त्रिपादीपूर्वं प्रत्यसिद्धा इत्येव लभ्येत तत्रैपादिकं तु पूर्वं प्रति परं नासिद्धं स्यादत आह। अधिकारोऽयमिति। यद्यत्र
कार्यासिद्धत्वमिष्येत तर्हि पूर्वत्रासिद्धमिति सूत्रेऽरपदत्यादौ उत्वं न स्यात्। परत्वाद्रोरीत्यस्य प्रसङ्गात् ॥

प्रक[illegible]
[illegible]योरपि अप्रवृत्त्यापत्तिरिति भावः॥ रोरीत्यस्य प्रसङ्गादिति॥ सिद्धे सिद्धत्वारोपात् सूत्रोदाहरणसंपत्त्यै परत्वाल्लक्ष्ये कार्यप्रवृत्तेरावश्यकतया परत्व
त्रैपादिके कार्ये जाते तत्राभावप्रतियोगित्वारोपेऽपि देवदत्तहन्तृहतन्यायेन स्थानिभूतरोरभावाद्धशि चेत्यस्याप्राप्तिरिति भावः॥ स्पष्टं चेदं प्रकृतसूत्रे अवः पास्मि
न्नित्यत्र रुत्वं तु कोरित्यत्र च भाष्ये ॥

तयोर्वर्णयोरिति। पूरणगुणेतिनिषेधस्तुषष्ठीसमासस्यनतुकर्मधारयस्यबहुलग्रहणेनतदभावेभाष्योदाहृतविषयएवनान्यत्रेतिभावः। प्रथमान्तेनेति। प्रथमोपस्थितत्वादितिभावः। अयंपक्षोनेक
मन्यपदार्थेतिसूत्रेभाष्येपरिनिष्ठितेति। अत्रचैकविभक्तिचापूर्वनिपातइतिज्ञापकम्। अन्यथामालामतिक्रान्तइतिविग्रहेऽतिपदस्यापिनियतविभक्त्यन्तत्वेनैकविभक्तौत्यस्यआवर्त्यालाभः। एक
श्चानियतविभक्तिकैवेहितद्धारणायैकविभक्तौतिसार्थकंपरिनिष्ठितविभक्त्यासमासेत्वतिक्रान्तमनिक्रान्तेनेत्यादिक्रमेणतस्यानियतविभक्तिकत्वंस्पष्टमेव। अतएवतत्पुरुषेतुल्यार्थेतिसूत्रेभाष्ये
परमेकारके परमेणकारकेणेत्यादावतिप्रसङ्गमाशङ्क्य प्रतिपदोक्तपरिभाषयासमाहितमितिभावः॥ अत्रचेति। सूत्रेइत्यर्थः। प्रश्लेषे। आकारप्रश्लेषेणनिर्देशाः लिङ्गमित्यन्वयः। निर्देशेनाकार
हकारयोःसावर्ण्याभावबोधकोनुमानिकवचनकल्पनापेक्षयाप्रश्लेषएवतात्पर्यकल्पनंलघीयइतिभावः॥ व्याख्यानादिति॥ एवंव्याख्यानेमानंतुप्रयत्नभेदेननाज्झलावित्येतत्प्रत्याख्यानपरंभा
ष्यंतत्ध्वनयन्वस्येतिसूत्रेमास्त्वितिभाष्येस्थितमिति॥ शीतलशब्देइति। शस्यईकारेपरे दधीतीकारस्यशकारेपरेचेत्यर्थः। नचशीङःआकारोच्चारणेनतच्छकारस्यकारेनदीर्घइतिवाच्यम्। शीतलश
तयोर्वर्णयोरितिप्रथमान्तेनपरिनिष्ठितविभक्त्यावाविग्रहइतिसिद्धान्तात्। ऋत्यकइतिप्रकृतिभावः। नाज्झलौ। आकारसहितइति। अत्रचकालसमयवेलासुतुमुन्नित्यादिनिर्देशः प्रश्लेषेलिङ्ग
मात्रैवंसमपिश्रेयासोदृष्टादैसुरोरनृनइतिसुलादाकारात्परस्यसनःसस्यषत्वंस्यादेवेतिवाच्यम्। आश्चआश्चेतिद्वन्द्वेसवर्णदीर्घेणदीर्घात्परत्रप्लुतोपिप्रश्लिष्यतइतिव्याख्यानात्। यथादि
शीतलशब्देसवर्णदीर्घआदिशब्दार्थः। अत्रेति। अत्रैवेत्यर्थः॥ ६७ ह्रे शी ङोभावात्। किंतुश्याधातोःक्तेद्रवमूर्तिस्पर्शयोः श्यइत्यनेनसंप्रसारणेश्योऽस्पर्शइतिनत्वाभावेचनिष्पन्नाच्छीतप्रा
... शीतलशब्दइत्युदाहरणात्। शीतशब्दोहिहिमादिगुणवृत्तिर्नैवपठ्यते। किंचनेनापूर्ववचनकल्पनापेक्षयासूत्रोदाहरणत्वमेवतस्ययुक्तमितिभावः। अत्रैवेति। ग्राहकसूत्रस्वेत्यर्थः।
...दितिसूत्रेतपरत्वंमानमन्नादित्युरादिण्यन्तात्कर्तरिक्तेलुङ्यचीकृतदित्यत्रदीर्घऋकारस्यस्थानेह्रस्वएवयथास्यादित्यर्थम्। पूर्वेणात्राणग्रहणेतुहेस्येनविधेयेनऋकारेणानण्त्वाद्भिन्न
ग्रहणेननतस्यस्थानित्वंनवाआदेशत्वंप्रसक्तमितिमर्थनतस्यात्। नचतपरसूत्रेणलकारग्रहणार्थंतत्। स्थानेन्तरतमपरिभाषयाऋकारस्थानेतस्यवारणेनतद्ग्रहणेफलाभावात्। नचैवन्नापिते
पिभाव्यमानत्वात्सवर्णग्रहणाप्रसक्तेस्तदैयर्थ्यम्। नपरत्वाभावेआदेशान्तरनिवृत्त्यर्थत्वेनस्वरूपाभ्यनुज्ञानार्थतयाऽपूर्वबोधत्वाभावेन। विधेयत्वात्। कृतेतुतपरत्वेभाव्यमानतापीत्यन्यदेतत्॥

हिरुगित्यादि। एषांक्रियासमानाधिकरणत्वाल्लिङ्गाद्यनन्वयित्वाच्चतदर्थस्यक्रियात्वमित्यभिमानः। एषामव्ययेषुपाठस्तुअप्रातिपदिकत्वेप्यकजर्थः स्यात्। एतेनतेषुपाठसामर्थ्याद्धा
तुत्वाभावइत्यपास्तम्। नन्वेषांक्रियाकाङ्क्षादर्शनेननक्रियावाचकत्वमतआह॥ शिष्ये इति॥ कालोपिधात्वर्थएवेतिनक्रियावाचकत्वहानिस्तस्यचधातुत्वेआदेचउपदेशेइत्यात्वं
स्यात्तन्निमित्तमितिकं धातुत्वनिमित्तकंचेतिस्पष्टमेव। अत्रप्रत्ययस्यैवधातुत्वापत्तिर्बोद्ध्या तिङन्तस्यतूपदेशाभावान्नात्वप्रसक्तिरित्याहुः॥ ननुषष्ठेप्रकृतसूत्रेधातुग्रहणासंब
न्धउक्तोभाष्येइतिनतद्धातुत्वनिमित्तकम्। किंचाशितीतिप्रसज्यप्रतिषेधोपिशित्परत्वयोग्यस्यैवात्वविधानान्नात्वप्रसक्तिरपिचवास्तदृष्यमन्यानाभिहितक्रियावाचकत्वे
नेतिनदोषातआह चेति॥ सूत्रशेषभाष्योक्तेषाणवयतिअटृयतीत्यादिषुचधातुत्वेशास्त्रविषयतयासाधुत्वापत्तिरितितद्व्यावृत्तयेतदितिभावः॥ उदित्करणेनेति॥ इदमुपलक्षणम्।

भ्वादयः किम्। हिरुक्पृथगित्याद्यव्ययानांशिष्येइतिभावार्थतिङन्तस्यचमाभूत्। स्तंभ्वादीनामुदित्करणेनसौत्राणांधातुत्वंज्ञाप्यते। चुलुंपादीनांतुबहुलमे
तन्निदर्शनमितिगणसूत्रेणसंग्रहः। चादयः। अद्रव्यार्थाः किम्। पशुः। लिङ्गसंख्यान्वितंद्रव्यम्। इहतुस्यादेव। लोधंनयन्तिपशुमन्यमानाः। पशुइतिसम्यग्
...उपसर्गाः। निस्दुस्इतिसान्तौ। निसस्तपताविति निर्देशात्। अयोगवाहानामविशेषेणेतिप्रकरणेनिष्कृतंदुष्कृतमित्युदाहरणादिदुदुपधस्यचाप्रत्ययस्येतिविसर्ज
नीय...कारोक्तेश्च। उपसर्गस्यायतावितिसूत्रेवामनोप्येवम्। निरःकुषः सुदुरोरधिकरणेइतिनिर्देशादिकान्तावपीतितत्रैवसूत्रेहरदत्तः॥ इतिसंज्ञाप्रकरणम्॥ *
तत्प्रकृते...कचवल्यनुवादेनाङ्विधानेनसार्वधातुकेपि...णविधानेनचधातुत्वम्। जुचंक्रम्येत्यत्रपठितजोः जपजभेत्यत्रपठितपसः ऋतिप्रभृतीनांचकेषांचिद्धात्वधिका
रविहितकार्यादर्शनात्वाद्धेयम्। एतेष्वस्थितस्यतेषांपाठस्यभ्रंशोनुमीयतेइतिभावः। मैत्रेयाद्यन्यसंमतंसमाधिमाह॥ बहुलमिति। सम्यगर्थेइति॥ नखलुअमृषिंनयन्तिपशुमन्य
मानाः इतिनिरुक्तेपशुमितिसानुस्वारपाठात्तत्रपश्वितिलुप्तविभक्तिकंसत्त्ववाचीतिवाच्यम्। लोधमित्यनवगतमितितद्भाष्योक्त्यात न्मात्रनिर्णायकेनिरुक्तेपशुशब्दांशेन्यथापाठेमा
नाभावात्। स्पष्टंचेदंप्रकृतसूत्रेहरदत्तग्रन्थेदशधातौमाधवग्रन्थेचेतिदिक्। वामनोप्येवमिति। तत्रहिदुःसान्तइतितेनोक्तम्॥ इतिसंज्ञाप्रकरणम्॥

योजनयेति॥यद्यपि तदनुवृत्त्यैव सिद्धेः सामर्थ्याच्छब्दव्यापाराश्रयणेन लभ्यते मूलोक्तार्थस्तथापि मन्दबुद्धिसाधारण्येन स्फुटत्वायैवमेवोक्तम्।सदृति॥अत्र नैव स्यादिति भावः॥द्दृ
ष्टमिति॥अत्रेकारस्यैव स्यानत्वन्त्यस्येति भावः।सोर्लुगिति॥अत एव दीर्घो नेति भावः॥तच्चेति॥इक इति पदं चेत्यर्थः॥अनेनात्र सूत्रे पदोपस्थितिपक्ष इति सूचयति॥अचोञ्णितीऔ
गुणहलन्तादौ तु लिङ्गस्यश्रुत्यपेक्षत्वादुर्बलत्वेन प्रथमतः शीघ्रोपस्थितपदार्थादिघटितवाक्यार्थबोधे वृत्ते निर्दिष्टस्थानिकत्वेनोपस्थितस्यापीक्पदस्य वाक्यार्थेऽनन्वयः।सार्व
धातुकेत्यादौ तु तदुपस्थितिं विनास्यान्याकाङ्क्षाशान्त्यभावेन बोध एव नेति विशेषः।एवं च पदश्रुतिनिमित्तेषापदैकवाक्यतयान्वयवत्यन्तरङ्गा॥स्थानषष्ठीत्वनिर्णये उपस्थिता
लोन्त्यपरिभाषया अनन्त्यस्य गुणाद्व्यावृत्तये वाक्यैकवाक्यतयान्वय इति बहिरङ्गत्वात्तदाह॥इगन्ताङ्गस्येत्यादि॥मृज्योरवयवस्येति॥एवं च स्थानषष्ठीत्वाभावनिर्णयेना

इको गुणवृद्धी॥गुणवृद्धिशब्दाभ्यामिति।एतच्च पूर्वसूत्राभ्यां गुणवृद्धिपदे अनुवर्त्य गुणो वृद्धिरिति ये गुणवृद्धी इति योजनया लभ्यते।तेनेह न।दिव

औत्।द्यौः।त्यदादीनामः।सदमम्।षष्ठ्यन्तप्रति।सूत्रे षष्ठ्यन्तस्यानुकरणात्तच्छब्दस्वरूपपरतया नपुंसकात्सोर्लुगिति भावः।पूदमिति।तच्च संभवति सामाना

धिकरण्ये इगन्तस्याङ्गस्येत्यादिक्रमेण संबध्यते।मिदेर्गुणः।मृजेर्वृद्धिरित्यादौ तु सामानाधिकरण्यासंभवान्मृदिमृज्योरवयवस्येक इति संबध्यते।यत्तु इक एवस्था

नेस्त इति प्राचा व्याख्यातं यच्च तट्टीकाकृतोक्तमनियमप्रसङ्गे नियमार्थमिदमित्यादि।तत्सर्वं भाष्यविरोधादुपेक्ष्यम्।तच्छेषपक्षं दूषयित्वा पदोपस्थितिपक्षस्यैव भाष्ये स

मर्थितत्वादित्याहुः॥ अलोन्त्यस्येत्यस्य प्रवृत्तिरेव नेति भावः॥नियमार्थमिदमिति॥तत्तद्विधायकैर्विहितयोर्गुणवृद्ध्योरलोन्त्यस्येतिवदिदमपि स्थानिनियमार्थमिति तदाशयः॥ त

त्सर्वं भाष्येति॥द्वयोर्नियमयोः सार्वधातुकेत्यादावविरोधेनेग्रूपस्यान्त्यस्येत्यर्थो वाच्यः॥अन्त्यस्येक इति वा।उभयथापि द्वयोर्विशेषणविशेष्यभावसत्त्वात्तच्छेषपक्षे पर्यव

सानम्।सः अलोन्त्यस्येति नियमः शेषो विशेषणमस्येति तदर्थः।तस्यालोन्त्यस्येत्यस्य विशेषणमिति वा।एवं च मिदेर्गुण इत्यादौ परस्परविरोधादनयोः स्वकमेस(?)र्वादेशगु शामः

णापत्त्यात द्विरोप इति भावस्तदाह॥तच्छेषपक्षमिति ॥ 3751

८

दूषणोद्धारस्त्विति॥मिदेरित्यत्रमिदद्गर्मिदिस्तस्येतिव्याख्यानान्नदोषः॥पुगन्तेत्यत्रपुकन्तोलघ्वीउपधेतिव्याख्येयमित्यादिभाष्योक्तदूषणोद्धारस्त्वित्यर्थः।नन्वप्रक्रम
तिङ्घापयतीत्यादौदोषः॥गुणेकृतेरद्वारूपसिद्धेः।अतएवसमयाच्चयापनायामितिनिर्देशः संगच्छतेनदोह॥कौस्तुभेस्पष्टीकृतमिति॥नन्वेवंतर्हिकिमर्थप्राचापस्त्र उ
पेक्षितइतिचेत्क्नुणुगलघूपधांशेइक्परिभाषानुपस्थितावनिग्लक्षणत्वादिनमित्यादौगुणनिषेधानापत्तिभियासउपेक्षितइति।क्नोः किंत्वस्यानिग्लक्षणत्वेपिगुणनिषेधप्रव
र्तिज्ञापकत्वाश्रयणेतुतस्यपदोपस्थितिपक्षज्ञापकत्वमेवोचितमितिदिक्॥इस्वादाविति॥आदिनाझलन्तलक्षणोनुमइदितोनुमित्यादिच॥अचोः संभवादिति॥नुमोमित्वेतुज्ञा
नातीत्यादौचरितार्थमितिमुचादावन्त्यस्यैवस्यादितिभावः॥दीर्घःसिद्धइति॥तच्छब्देनयस्यविहितस्समुदायःपरामृश्यतेइतिभावः।यद्यपितस्यान्त्यावदितिव्याख्यानेपिभवितेत्या

तच्छपक्षेपिदूषणोद्धारस्तुशब्दकौस्तुभेस्पष्टीकृतोस्माभिः।अचांमध्यइतियत्तुप्राचोक्तमन्त्यादचः परइति।तन्न।शोमुत्रादीनामित्यादावन्त्यस्याचोसं
भवात्।तस्यैवान्तावयवइति।तेनत्रपुणीत्यादौअङ्गस्यनान्तत्वेनदीर्घः सिद्धः।परादित्वेसनसिद्ध्येत्।अभक्तत्वेतुवहंलिहइत्यत्रवहाभ्रेलिहइतिव
शिअरुर्द्विषदितिमुमिमोनुस्वारोनस्यात्।अपदान्तत्वात्।यत्त्वभक्तत्वेत्रपुणीतिदीर्घोनस्यादितितन्नदादिग्रहणंस्यादिनुमर्थमित्यङ्गसञ्ज्ञासूत्रस्थवार्ति
केनैवदूषितप्रायम्।स्थानेयोगेति।स्थानेनयोगोस्यादितिविग्रहः।निपातनादेत्वम्।अनेकविधमिति ॥

द्वौतासदयवेटौलघूपधाङ्गावयवत्वेनप्राप्तस्यगुणस्यदीधीवेवीटामितिनिषेधारम्भेपालोकव्यवहारेणचावयवावस्यसमुदायावयवत्वाङ्गीकारादत्रनदोषः।तथापितथा
त्र्यास्व्यातंपञ्चारत्नीनीत्यादौपदस्यविभज्यान्वाख्यानेउत्तरपदस्यापिनान्तत्वापत्ताविगन्तेतिस्वरानापत्तेरितिस्पष्टंभाष्यादौ॥त्रपूणीत्युपलक्षणंतातापिण्डानामितिनलो
पश्छिदेः।तानितानीत्यर्धर्चःछन्दसीतिशेर्लोपेतदुदाहरणम्॥स्थानेनेति।स्थानशब्दार्थेनेत्यर्थः।तन्निरूपितसंबन्धः षष्ठ्यर्थोनतुतद्रूपः सबन्धस्तदर्थइतिअनेनध्वनयति
॥एत्वमिति॥व्यधिकरणबहुव्रीहिरप्यतएवेतिबोद्धम् ॥

गुणप्रमाणेति॥प्रमाणस्यह्रस्वत्वादेर्गुणत्वेपिब्राह्मणवसिष्ठन्यायेनपृथग्युक्तिः।गुणशब्देनोक्तत्रितयातिरिक्तधर्ममात्रंतेनानान्तर्यमेवैतयोरान्तर्यमित्यादिस्थानेन्तरतमसूत्रस्य
भाष्येणनविरोधः।अन्तरतमाभावएवगुणविधौऋकाराकारयोःसादृश्यमितितदर्थः॥बाह्यानांविवारादीनांसाक्षाद्वर्णावृतित्वेप्यौपचारिकंगुणत्वंबोध्यम्।अनुकरणमिति॥अचीत्या
दिसप्तम्यन्तार्थकस्यस्वतन्त्रतच्छब्दस्यनिर्देशोनस्वरूपपरंव्याख्यानादिहलस्यसंस्कारानुरोधाच्च।सप्तमीतुसप्तम्यन्तानामेवतच्छब्दार्थत्वमितिबोधनाय।तद्बोध्यार्थस्यनिर्दिष्टइत्यनेनसा
मानाधिकरण्यायचेतिभावः।शब्दार्थकत्वेनत्वनुकरणत्वव्यवहारइतिबोध्यम्।दिशिरुच्चारणेति॥अतएवजनपदेलुबित्यादौनदोषः।नह्यर्थउच्चारितोनापिशब्दस्यनिरन्तरइतिभावः॥अचि
यणिसुक्तेइति॥अचिउपश्लिष्टस्ययणित्युक्तेइत्यर्थः।इदंचसंहितायामितिसूत्रेभाष्येस्पष्टम्।फलितेति॥सप्तम्यन्तार्थेऽव्यवहितेषष्ठ्यन्तार्थोप्यव्यवहितएवेतिभावः॥नसूत्रितमिति॥स्वरूपमित्यतःप्रागिति
स्थानार्थगुणप्रमाणकृतमित्यर्थः।बलीयइति।तेनचेतास्तोतेत्यत्रप्रमाणतआन्तर्यवानकारोनेतिभावः।तस्मिन्निति।सप्तम्यन्तानामनुकरणम्।निःशब्दोनैरन्तर्येपरः।दिशिरुच्चारण
क्रियः।अचियणित्युक्तेऽव्यवहिते।व्यवहितेचसतिप्राप्तमव्यवहितेएवेति,पूर्वस्यपरस्यचप्राप्तंपूर्वस्यैवेतिचनियम्यते।अव्यवहितस्येतितुफलितार्थकथनम्।परस्यमदिति।तस्मादित्युत्तरस्यादेरि
तितुनसूत्रितम्।आदेरित्यंशस्यसर्वादेशबाधकत्वापत्तेः।सिद्धान्तेतुपरत्वात्सर्वादेशत्वंबाधकमित्यनुपदमेववक्ष्यति।अनेकाल्शितउदाहरणमिदमदसइत्।यत्तुवृत्तिकृताजश्शसोःशिरित्यु
दाहृतंतन्न।सर्वादेशतायाःप्राक्शित्वस्यैवालाभात्।तत्रहिडाणलोरिवानुपूर्व्यादनेकाल्त्वेनैवसर्वादेशत्वमितिसिद्धान्तः॥ ७ शेषः।तत्रादेरितिपृथग्वाक्यंतत्रोत्तरस्येत्यनुवर्ततेस्थानषष्ठीचेयंपञ्च
मीनिर्देशेनयत्कार्यंतदुत्तरसंबन्धिउत्तरस्यस्थानेविधीयमानंचादेर्बोध्यमितिवाक्यार्थइयंवाक्यभेदसामर्थ्याच्चादेरित्यंशंविनापिक्वचिदंशान्तरप्रवृत्तिः।आदेरित्यंशस्त्वनुवृत्तोत्तरस्येत्यस्यापवादःपरत्वबो
धकशब्देनयत्रविधानंतत्रैवेतिनिरस्तंङितइत्यादौनप्रवर्त्ततइतिभावः॥वक्ष्यतीति॥नचानेकालित्यतःपूर्वमेवतस्मिन्नितिनिर्दिष्टेपूर्वस्यतस्मादित्युत्तरस्यादेरितिसूत्रेकृतेनपठितेइतिवाच्यम्।
आदेरित्यंशेषष्ठीस्थानेइत्यस्यासंबन्धेआज्जसेरसुगित्यादावपितस्यप्रवृत्त्यापत्तेःसंबन्धेमध्येतस्मिन्नितितस्मादित्यनयोरपितत्संबन्धेतयोरप्यागमविषयेऽप्रवृत्त्यापत्तेरितिदिक्॥डाणलोरिवेति॥
आदेशानांप्रत्ययाधिकारेपाठेपिवाक्यार्थबोधोत्तरमेवप्रत्ययत्वज्ञानेनोपदेशेणकारेइत्वाप्रवृत्ते स्तदुत्तरंलस्यप्रवृत्तिकालेइत्वेप्यनेकाल्त्वात्स्तेरितिभावः ॥

प्रवर्तन एवेति॥ उपपादितमेतत्॥ शब्दान्तरप्राप्त्येति॥ यद्व्यक्ति संबन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसंबन्धितयैव पुनः प्रवृत्तौ कृताकृतप्रसङ्गित्वं प्रसिद्धमिति भावः॥ कृताकृतेति॥ व्यक्तिविशे
षानाश्रयणेनेत्यर्थः॥ वृद्धौ सत्यां तद्बाधेत्यस्य तन्नम प्राप्तिः। साहचर्येण विभक्तिनिमित्तानामेव वृद्ध्यादीनामत्र ग्रहणात्। नित्यत्वेनैव सिद्धे वाचनिकपूर्वविप्रतिषेधाश्रयणे फलाभावाच्चेति दि
क्॥ अन्तरङ्गत्वादिति॥ भाष्ये लयप्प्रत्ययान्तरं न तु तयवादेशः। उभयीत्यत्र कृत्तिप्रमात्रजिति प्रत्याहाराश्रयणेन साधितः। एवं चोभयशब्दे विकल्पस्य प्राप्तिरेव नेति उक्तम्। अन्तरङ्गस्य बलवत्त्वे त्वा
इत्यादाविति। आदिशब्देनातोभिस ऐसुरिति गृह्यते। परत्वादिति। अत एवादेः परस्येति पृथक् क्रियत इत्युक्तम्। उत्तरस्येत्यंशस्तु औशे सोरपि प्रवर्तत एव। यत्तु प्राचा आदेरिति सूत्रं [illegible]
पञ्चमीनिर्देशेनेत्यायुक्तं तदसंबद्धमिति स्पष्टमेव। परनित्येति। परान्नित्यं यथा। तुदति। रुणद्धि। परमपि लघूपधगुणं बाधित्वा शश्नमौ। तथा रधेर्णिच्। रन्धयति। परामप्युपधावृद्धिं बा
धित्वा रधिजभोरिति नुम्। न च सोपि शब्दान्तरप्राप्त्यानित्य इति वाच्यम्। कृताकृतप्रसङ्गमात्रेणापि क्वचिन्नित्यताभ्युपगमात्। अन्तरङ्गं यथा। उभये देवमनुष्याः। इह प्रथमचरमेति
परमपि विकल्पं बाधित्वा सर्वादीनीति सर्वनामसंज्ञा विभक्तिरनपेक्षत्वेनान्तरङ्गत्वात्। अपवादोपि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण गुणेन बाध्यत एव। तद्यथा। अयजे इन्द्रं
ग्रामे इह सर्वे इत्यत्रान्तरङ्गेण गुणेन सवर्णदीर्घो बाध्यते। स च यद्यपि यणगुणयोरपवादस्तथापि समानाश्रये चरितार्थः। तथा च वार्तिकम्। इण्ङिशीनामाद्गुणः सवर्णदीर्घ
त्वादिति। असिद्धमिति। तेन पचावेदमित्यादावेत ऐत्वं न। अकृतव्यूहा इति। यद्यपि कृतमपि वा निवर्तयन्तीति परिभाषान्तरं पठ्यते फलं च तुल्यम्। तथापि अकृतेत्येव लघु प्रक्षा
लनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायादिति भावः। न कुर्वन्तीति। यथा निषेदुषीमित्यादौ क्वसोरिटमन्तरङ्गत्वात्प्राप्तमपि भाविना संप्रसारणेन वलादित्वं नङ्क्ष्यतीत्यालोच्य न कुर्वन्तीत्यर्थः। इति
परिभाषाप्रकरणम् [illegible] एकमन्यत्र प्रपञ्चितम्। बाध्यत एवेति॥ निरवकाशत्वरूपस्य बलवत्त्वबीजस्याभावात्॥ तेनेति॥ पूर्वान्तु अन्तरङ्गबहिरङ्गयोर्युगपत्प्राप्तावेवेति भावः॥ न कुर्वन्तीत्यर्थ इति॥ यदि
तु सेदुष इत्यादौ पदावधिकेन त्वाख्याने सेदुस् असिति स्थिते इट्संप्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात्पूर्वं संप्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेत्यस्यानुरोधो [illegible]
[illegible]भिकमेवास्य। स्यानमिति तत्सिद्धिरित्युच्यते तदेषा परिभाषा निष्फलेति बोध्यम्। अत एव भाष्येन क्वापि व्यवहृतेत्यन्यत्र विस्तरेण निरूपितम्॥ इति परिभाषाप्रकरणम्॥

ननु व्यक्तिपक्षे इकः पदोपस्थाप्योकारादिभिर्दीर्घादिग्रहणं न स्यात्। उच्चरित एव शब्दः प्रत्यायको नानुच्चारित इत्यणुदित्सूत्रे भाष्योक्तेः। न चोच्चारितस्यैव प्रत्यायकत्वे रहसि पुस्तकमीक्षमाणस्य बोधा
नुपपत्तिरिति वाच्यम्। तत्रापि पुस्तकद्रष्टुः स्वीयस्य सूक्ष्मोच्चारणस्य सत्त्वादित्यत आह ॥प्रत्याहारग्रहणेष्विति॥ एतेन दीर्घकारादेर्ग्राहकशास्त्रबलेन इकारादिभिर्बोधेऽपि तेषामिक्पदवृत्त्यानुपस्थितत्वेन त
द्घटितप्रत्ययार्थान्वयापत्तिरित्यपास्तम्। वृत्तिप्रयोज्योपस्थितिसत्त्वेनादोषाच्च। नन्वणुदित्सूत्रं व्यर्थम्। न च प्रत्याहाराणामाद्यवर्णेषु चरितार्थम्। अन्यवर्णानामिव तत्सवर्णानामपि लक्षणयैव ग्रह
णसिद्धेः। न चास्य वाविस्यादौ चारितार्थ्यम्। व्यक्तिपक्षेऽस्य प्रत्याहारसूत्रस्थतो भेदेनाण्त्वाभावादिति स्पष्टमणुदित्सूत्रे भाष्ये इति चेन्न। लक्ष्यतावच्छेदकज्ञानार्थमेव तच्चारितार्थ्यात्। प्रत्याहारेषूपलक्ष
णं तद्वाच्यवाच्येति च। अस्य वाविस्यादावपि स्वसदृशवाच्येऽपुलक्षणावश्यकत्वात्। अणुदित्सूत्रगृहीतलक्ष्यतावच्छेदकिकालक्षणा विधीयमानातिरिक्तविषये एव प्रत्यय इत्युक्तेः। अत एव सदादी
नामद्त्यादौ न स्वसदृशवाच्येऽपुलक्षणा॥ नाज्झलौ अणुदिदित्यत्र तु न लक्षणा तद्बोधकाले लक्ष्यतावच्छेदकाग्रहादिति भावः॥ तत्र प्रमाणमाह। दीर्घादिति॥ अक्पदे दीर्घोच्चारणं स्वसवर्णग्र

इकोयणचि। प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढा लक्षणा। दीर्घाज्जसि चेति ज्ञापकात् त्वादिभ्य इति निर्देशाच्च। तेनेकुशब्देन षट्षष्टिर्गृह्यते। यण्शब्देन सप्त
भाव्यमानत्वेन सवर्णाग्राहकत्वेऽपि गुणानामभेदकत्वेनानुनासिकानामपि यवलानां ग्रहणात्। अतो नास्ति यथासंख्यम्। न च लक्ष्यार्थबोधात्पूर्वं मानाभावेन शक्यार्थबोध
मादाय यथासंख्यमस्त्विति वाच्यम् ॥ ७ ॥

हणेऽपि तत्र नादिचीत्येव सिद्धमिति भावः। तेन लक्षणाङ्गीकारेण। भाव्यमानत्वेनेति॥ विधीयमानविषये लक्षणाभावस्यानुपदमुक्त
त्वादिति भावः॥ अभेदकत्वेनेति॥ सत्त्वे उच्चारितगुणानां भेदकत्वाभावेऽपि स्वरूपकृतभेदमादाय सप्तत्वसंख्यानविरुध्यते। यदि तु अणुदित्सूत्रेण ग्रहणाद्यण्विषये गुणानां
भेदकत्वे वाचितेति विभाव्यते। तदापि चत्वारो यण इति यथासंख्यमसंगतमेव। तद्ध्वनयन्नाह॥ अतो नास्तीति॥ तत्खण्डने एवाग्रहो न तु सप्तत्वसंख्यायामिति भावः॥ शक्या
र्थबोधमादायेति॥ त्वादिभ्य इत्यादिनिर्देशो हि तत्तात्पर्यानुपपत्तिग्रहस्य तत्त्वत एव संभवेन स बोध आवश्यकस्तत्र च यथासंख्यसहायेन वाक्यार्थे निष्पन्ने त्वादिभ्य इत्यादि
निर्देशाल्लक्षणया जायमाने पुनर्वाक्यार्थबोधे लक्षितदीर्घादीनां स्ववाचकान्वयिन्येवान्वय इति भावः ॥

स्थानेन्तरतमसूत्रेणैवेति॥ व्यक्तिपक्षेव्यक्तीनामानन्त्येन संख्याज्ञानाभावाद्यथासंख्यासंभवाल्लस्यास्तिद्धेश्चेतिभावः। परेतुव्यक्तिपक्षेझलादिप्रत्याहारसूत्रेषुसर्वझकारादीनांग्र
हणंदुरुपपादम्। नहितत्रलक्षणावक्तुंशक्यालस्यतावच्छेदकाग्रहात्। एवंचतत्रप्रत्याहारसूत्रेषुजातिनिर्देशेनैवनिर्वाहोनान्यथा। एवंचाट्उपित्याद्यावपिजातिनिर्देशएवोचितः।
अर्द्धजरतीयस्यानौचित्यात्। अतएवाणुदित्सूत्रेभाष्येप्रत्याहारेष्वसच्चाविल्यादौचउक्तामनुपपत्तिमाशङ्क्य जात्याश्रयणमेवकृतम्। यथासंख्यसूत्रंचव्यक्तिसाम्यइवधर्मसाम्येपि
प्रवर्तते स्यतासीलृलुटोरित्यादौयथा। नाप्यत्रपक्षेऋकारादौलकारस्यापत्तिः। लृत्वादिजातेर्ऋकारादावभावात्। नचजातिपक्षेऽणुदित्सूत्रेऽण्ग्रहणप्रत्याख्याने उरण्रपर इत्यत्र ऋकारादौ
ऋकारेणलकारग्रहणायसावर्ण्यवचनस्यानेलृवर्णस्यऋवदतिदेशाल्लृकारेरेफापत्तिरितिवाच्यम्। क्लृप्तशिखार्थंतस्यातिदेशस्यानित्यत्वावश्यकत्वात्। तत्पक्षेण्ग्रहणप्रत्या
एवमपितृतीयचतुर्थाभ्यामृकारलृकाराभ्यांप्रत्येकंत्रिंशदुपस्थितौलृवर्णानांरेफादेशस्यऋवर्णानांलादेशस्यचप्रसङ्गात्। तस्मादिहस्थानेन्तरतमसूत्रेणैवेष्टसि
द्धिरित्यभिप्रेत्याहस्थानतआन्तर्यादिति। अनचिचाद्वेति। यरोनुनासिकइतिसूत्राद्वाग्रहणमनुवर्ततइतिनाज्झलाविति सूत्रेकैयटः। एवंचसर्वत्रशाकल्यस्येतिसू
त्रंतत्रपञ्चभूतंपूर्वोत्तरसूत्रद्वयंचनारम्भणीयमितिभावः ॥ ७ स्थानेष्वप्रत्ययइत्यंशोवाक्यभेदेनविधीयमानेजातिग्रहणप्राप्तसवर्णग्रहणनिषेधकस्तत्परसूत्रे
वदितित्वदादीनामद्त्वात्तेनदोषः। एवंचात्रयण्पदेनजात्याश्रयणेनापिनसवर्णबोधनमितिसौजसित्यादौअनुनासिकस्थानेपिनिरनुनासिकएव। अत्र एवस्थानेन्तरतमसूत्रे
भाष्येस्यतदुदाहरणसमाशङ्क्य यथासंख्यमित्यनेनापिसिद्धमित्युक्तंतेनात्रतयोःफलाविशेषउक्तः। उञइतिसूत्रेनव्यानांप्रमादएव। नचझलादिषुझकारादिभीरूपसादृश्येन
सर्वझकारादिप्रतीतिरितिवाच्यम्॥ अगादिष्वपिकिंचित्सादृश्यमाश्रित्यदीर्घादीनामपिग्रहणोपपत्तेः। ल्वादिभ्यइतिनिर्देशानामीषत्सादृश्येनापिग्रहणमित्यर्थज्ञापकतायायुक्त
त्वात्। तदयुक्तमइउण्सूत्रेभाष्येरूपसामान्याद्वासिद्धमिति। अणुदित्सूत्रेऽण्ग्रहणंतुप्रत्याहारान्यवर्णेषुणकारादिभिश्चिह्नैः प्रत्याहारसूत्रस्थोयमितिप्रत्यभिज्ञासत्त्वादुपाया
न्तरपरमाचार्याःकृत्वाननिवर्तन्तइतिन्यायादिदमेवाभिप्रेत्यनत्रत्यमण्ग्रहणंप्रत्याख्यातंभाष्येइत्याहुरितिदिक् ॥

म.क्र.
१२

क्लिश्यन्ते इति॥ अनचीत्यनुवर्त्यपर्युदासपरतया हलि पर एव नित्यनिषेध इति व्याख्यानेनेति भावः॥ विकल्प उक्त इति॥ एवं च सर्वत्र शाकल्यस्येति वदिदमपि प्रपञ्चार्थमिति भावः॥
असतीति॥ यत्तु नादिन्यीत्यादौ वृत्तावनचीति प्राप्तिमुद्भाव्य त्रिप्रभृतिषु सर्वत्रेत्यनयोः प्राप्तिमनुद्भाव्य पुनर्दीर्घादित्यत्रानचीति प्राप्तिरुद्भाविता हरदत्तेन। तस्यायमाशयः। निषेधविक-
ल्पे प्राप्त्युद्भावनं नावश्यकं तद्विकल्पे विधिविकल्पस्य फलितत्वेन विधेरेव अप्राप्तविषय विकल्पसंभवात्। नित्यनिषेधे तु तदुद्भावनमावश्यकमिति तन्न। विकल्पेऽपि निषेध
प्रकरणानुल्लेखस्यावश्यकत्वेन प्राप्त्युद्भावनस्यावश्यकत्वात्। मद्धनेनजो संबन्धो मण्डूकानुवृत्तिरग्रे इत्यत्र मानाभावाच्च। सर्वत्रेति सूत्रे स्वाद्वित्वमात्रनिषेधकतेति बोधयितुं तदनुल्लेखाच्च।
त्रिप्रभृतिषित्येन तद्विषये मकारयकारयोर्द्विर्वचनाभाव इति मिश्रग्रन्थेन प्राप्त्युल्लेखस्य कृतप्रायत्वाच्च। वृत्तिहरदत्तयोर्नादिन्याक्रोशे चेत्यनयोरपि प्राप्त्युल्लेखस्य बहुषु पुस्तकेष्वनुपलम्भाच्च।
यत्तु दीर्घादाचार्याणामिति सूत्रे आचार्यग्रहणं पूजार्थमित्यभिप्रेत्य वाक् वाक्क् इति भाष्योदाहृते विकल्पे उपपत्तिविन्तार्थं क्लिश्यन्ते तन्मुधैव। पूजार्थतायाः प्राभाषिकैरनुक्तेः।
त्रिप्रभृतिष्विति सूत्रे शाकटायनग्रहणस्यापि तथात्वापत्तेः अनवेष्टापत्तिः। सस्कृतैनेति त्रिसकारत्वपरकैयटहरदत्तादिग्रन्थविरोधात्। स्वग्रन्थविरोधाच्च। अत एव प्रातिशाख्यभा-
ष्येऽपि आत्वारथमिति मन्त्रे तकारस्य द्वित्वविकल्प उदाहृतः। माधवेन चात्से इत्यत्र सकारस्य द्वित्वविकल्प उक्तः। एवं च धात्रं शद् इत्यत्र तकारस्य द्वित्वेम सदिस्युक्तिरेवासतीति दिक्। स्था-
निवदादेशः। धातवङ्कृतद्धितान्यसुप्ति रूपदादेशा इति प्राचोक्तम्। तत्परिगणनमुदाहरणमात्रं वा। नाद्यः। सिच्कत्वचङ्ङादीनामादेशस्य शानच्श्वासंग्रहापत्तेः॥
तिदिक्॥ चङ्ङादीनामिति॥ आदिना चिण्णः। केवलं ङ्यादेशानामेवासंग्रह इत्याह॥ स्थानादेशस्येति॥ तदभावे ह्यवादिषातामित्यत्र इट् न स्यात्। क्सादेः कादीनामित्वं न स्यात्॥ शानेच: शेऽस्य च न
भस्यान्त्याहिर्दृशादित्यादौ अङि गुणो न स्यादिति भावः। ननु सिजादीनां प्रत्ययाधिकारे पाठात् स्म मत्प्रत्ययत्वमस्तीति न स्थानिवत्वोपयोगः। न च तेषां प्रत्ययत्वे ङ्विधानं व्यर्थं मन्त्रेषु घ
सेति सूत्रे च ङ्ङः स्विचामिति त्रयाणां ग्रहणे गौरवापत्तेः। सिचो लुकि तद्विषये आदिः सिच इति स्वरापत्तिश्चेति भाष्यकैयटयोः स्पष्टमिति रुचेराह। चेति। तेनाग्रहीदित्यादौ विडादेशस्य ई-
टो सङ्ग्रह इत्यर्थः। इदमुपलक्षणमव्ययस्य पदात्वपग्रहणे वैयर्थ्यमपि दोष इति बोध्यम्॥

शर्मः

अव्ययस्येति। अत्र तस्यैव दोषत्वमिति भावः। नन्वव्ययस्याङ्गत्वे फलाभावेन प्रत्ययस्य लुक्त्वालुप्तत्वेन च तदप्राप्तौ कथं तेनाव्ययसंग्रहो तत आह। पदेति। तत्त्वं च ततः परस्य प्रत्ययस्य भावस्यक प्रत्ययलक्षणेन सुबन्तत्वाच्च तत्त्वमिति भावः॥ सिद्धत्वाच्चेति। अत एवात्र तुक्। न च सर्वे सर्वपदादेशा इति न्यायेन प्रस्तुत्वादिलस्य स्थाने प्रस्तुत्य इत्यादेशे तस्याव्ययत्वसिद्धिरिति शङ्क्यम्। एवं इति वाच्यम्। अर्थवत्त्वेव स्थानिवत्त्वमिति तात्पर्येण त्वोऽप्यर्थवत्त्वेन तादृशस्थान्यादेशभावकल्पने मानाभावादिति दिक्॥ अनल्विधाविति किमिति॥ विधिग्रहणविशिष्टं किमर्थमिति प्रश्नः॥ णत्वं प्राप्तमिति॥ न च सकारे स्वतोऽट्भिन्नत्वसत्त्वात् अट्भिन्नव्यवायेनेति निषेधात् कथं णत्वप्राप्तिरिति वाच्यम्। अतिदिष्टस्य न धर्मविरुद्धत्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात् इदं चासिद्धवत्सूत्रे कैयटे स्पष्टम्॥ लुकाम इति॥ यद्यपि वत्वं हलत्वाद्यपेक्षया विशेषधर्मस्तथाप्येतद्वाक्योपप्लुतेवकारत्वं नान्त्यः। अव्ययस्याङ्गपदत्वभ्यां पृथग्ग्रहणवैयर्थ्यात्। प्रस्तुत्येति वृत्तिकारोक्तं तदुदाहरणमपि मन्दम्। त्वामात्रस्यानव्ययत्वात्। कृत्वेन सिद्धत्वाच्चेत्याशयेनाह। आदेश इति। अनल्विधाविति किम्। तेन तस्मात् तस्य तस्मिंश्च विधौ मा भूत्। तत्र अलाविधौ यथा। व्यूढोरस्केन। अत्र सकारस्य स्थानिवत्त्वेन विसर्गवद्दृत्वमाश्रित्या द्वित्वायेदिति णत्वं प्राप्तम्। अलः परस्य। द्यौः। पन्थाः। हलङ्यादिलोपेन। अलो विधौ। द्युकामः। वलिलोपेन। अलि विधौ। यजेः क्तः। कदृष्टः। हशि चेत्युत्वं न। अल्त्वे हस्थान्यवयवएव वा इत्येतेन रामायेत्यादौ सुपि चेति दीर्घः सिद्धः। न हि यौहियजादित्वमाश्रितं यत्रादेशावयवो न तु स्थान्यवयव इति तदेतत्सकलमभिप्रेत्याह। न तु स्थान्यलाश्रय इति। आश्रयणं चेह प्रधान्येनैवेत्याग्रहः। तेन प्रपचत्येत्यत्र वलादिलक्षण इण्न। ७) इकार इति वाक्ये उपात्तधर्मापेक्षया न तस्य तत्त्वम्। स्त्रत्वं तु प्रस्थान्यादेशभावमादायैवेत तत्कृतवाक्योपपन्नवादिति भाव॥ कदृष्ट इति॥ यद्यपीदं रूपमुत्वे गुणे वा देशे पाक्षिकलोपेन सिद्ध्यति तथापि पक्षे कविष्ट इति स्यात्। कयिष्ट इति चेष्यते इति भावः॥ स्थान्यवयवएवेति॥ उपलक्षणमेतत्स्थानिरूपापीति बोध्यम्। अत एवादेशिन्यल्याश्रीयमाणे प्रतिषेध इति भाष्ये उक्तम्। न तु स्थान्यवमव इति॥ अतः प्रत्ययत्वस्य स्थानिवत्त्वेन भवत्येवेति भावः। अग्रहीदित्यादौ ग्रहोलिटीत्यनेनेट एव दीर्घविधानात्त्वेन तस्य स्थानितेतित हतीत्वाश्रयस्य सिचो लोपस्य सिद्धिरिति बोध्यम्। यथाकथंचिदिति॥ व्याख्यानादिति भावः ॥

इह लिङ्गमिति। अन्यथोपसर्जनत्वाद् ह्रस्वापत्तौ हल्ङ्यादिलोपस्य दुर्वारत्वेन तद्धेमर्थ्यस्य इष्टमेव। न च वचनसामर्थ्यादुपसर्जनत्वेऽप्यत्वमिति वाच्यम्। लाघवेनोत्तरपदार्थप्राधा
न्यस्यैव ज्ञापयितुं युक्तत्वात्। अब्राह्मणानयेत्यत्र विशेषश्चिन्त्यः। आर्थिकार्थमिति। आरोपितत्वबोधोत्तरं प्रकरणादितात्पर्यग्राहकवशान्नानसत्तार्थबोध इति भावः। उत्तरपदप्रा
धान्यम्। तदर्थप्राधान्यम्। भाष्योक्तमित्यनेनैकैयटाद्युपपादितपूर्वपदार्थप्राधान्यपक्षस्य तदसंमतत्वात्तुच्छत्वं बोधितम्। तच्चान्यत्र प्रपञ्चितम्। वास्तवबहुत्वेति। नचैकत्वारोपे

तत्पुरुषस्यौत्सर्गिकमुत्तरपदार्थप्राधान्यमप्येवं सति निर्बाधम्। एतत्तत्त्वं रीतिसूचनेन नञ्समासग्रहणं चेह लिङ्गम्। मीमांसकादयस्तु अब्राह्मणमित्यादि शाब्दबोध
एवेत्याहुः। तन्मतेऽसद्व्यादेः अतिसर्वद्व्यादिसमकक्षत्वात् सर्वनामसंज्ञाकार्यं गणकार्यं च न स्यात्। यत्तु तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरो
धश्च नञर्थाः षट् प्रकीर्तिता इति पठित्वा अब्राह्मणः। अपापम्। अनश्वः। अनुदरा कन्या। अपशवो वा अन्ये गोअश्वेभ्यः। अधर्मः। इत्युदाहरन्ति। तत्तु मध्यमपमार्थि
कार्थमभिप्रेत्य कथंचिन्नेयम्। सर्वथापि नञ्समासस्योत्तरपदप्राधान्यं भाष्योक्तं नान्यथयितव्यम्। अत एवानेकमन्यपदार्थ इत्यत्रानेकशब्दादेकवचनं प्रयुक्तम्
भाष्येऽपि। सेयं तेऽनेकयाऽसन्तताऽयाङ्क्येति। कथं तर्हि यत्तन्त्यनेके जलधेरिवोर्मय इति। उच्यते। अत्रारोपितैकत्वानां प्रकृत्यर्थतयान्वितत्वात्तत्र वास्तवबहुत्वाभिप्रायं बहुव
चनम्। यद्वा समुदायबहुत्वे बहुवचनम्। रथोऽश्वो राजश्च प्रत्येकमनेकस्त्वतः। अनेकश्चानिकश्चेत्येकशेषात्। यत्तु प्राचीनप्रक्रियायां व्याचख्युः। नञ्विशिष्टोत्तरपदेनस
हस्याद्योत्वस्य तत्त्वादि।

विषये आरोपितस्योत्तरत्वेनोत्तरसंख्यायाश्च पूर्वसंख्यान्वहारप्रतिबन्धकत्वान्न तत्र बहुत्वभानम्। शब्देनैकत्वस्यैवोपस्थितेः। अन्यथाऽनेक
मन्यपदार्थ इत्यत्रापि वास्तवबहुत्वसत्त्वाद् बहुवचनापत्तिरित्यरुचेराह। यद्वेति। रथो गज इत्युपलक्षणं ज्ञापकसमूहस्यापि। अनेके इत्यस्य पद्यभेदेनोभयविशेषणत्वात्।
साहचर्याद् यद् इति। तद्भिन्न इत्यर्थः। कारिकायां सदृशादीनामिति पाठदर्शनात् ॥

तत्त्वकौमुदीति। तद्ग्रन्थेऽपि पूर्वन्तेषामार्थिकार्थत्वकथनात्। आकरविरुद्धं चेति। विशिष्टेनलक्षितस्य प्राधान्येऽपि आकरोक्तोत्तरपदार्थप्राधान्यहानेरिति भावः। मासजातवदिति। तन्नप
ध्याजातस्य प्राधान्यं तथा प्रकृते ब्राह्मणादेरारोपितो ब्राह्मण इति बोधात्। नञर्थमिलितम्। नञर्थप्रकारेण जनितबोधम्। तत्समस्तं पदम्। आरव्यास इत्यादिलक्षकमित्यर्थ इतित
द्व्याख्यातारः। भाष्यविरुद्धमिति। तथाप्रकारस्य भाष्येऽनुक्तेः। अर्थत एव तद्बोधसंभवेन लक्षणाया अयुक्तत्वाच्च। समर्थयितुमिति। मीमांसकाद्युक्तपूर्वपदार्थप्राधान्यमिति शेषः। लक्ष
णीवेति। नञो भेदवत्त्यर्थ इत्यर्थः। इदमुपलक्षणम्। निपातानामनेकार्थत्वादित्यस्यापि। ज्ञापकादिति। नञ्समासे उत्तरपदार्थप्राधान्ये सति यदि भवति तत्पूर्वपदार्थप्राधान्येऽपीति सा

तत्त्वकौमुदीग्रन्थसंदर्भविरुद्धमाकरविरुद्धं च। यद्यपि विचारचिन्तामणावुक्तम्। समासे तूत्तरपदप्राधान्यं मासजातवत्। नञर्थमिलितं तत्र च सदृशादिनिलक्षये
दिति। तदप्युक्तरीत्या भाष्यविरुद्धमिति स्पष्टमेव। यदि तु स्वातन्त्र्यमेवावलम्ब्यते तर्हि कथंचित्समर्थयितुं शक्यम्। तथा हि। अस्तु लक्षणैव। तथापि नञ्समासे उत्त
रपदप्राधान्यप्रयुक्तकार्याणि लभ्यन्ते। अनञ्समास इति ज्ञापकात्। उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता इति न्यायात्। समासे त्विति विग्रहवाक्ये नञोऽसम
स्तत्वात्किमर्थेवान्वय इति ध्वनयति ॥

मान्यापेक्षज्ञापकादनेकमित्यादावेकवचनस्यापि सिद्धिः। एवमाश्रयणेति गौरवं लाघवात्तूत्तरपदार्थप्राधान्यं ज्ञापक
कत्वमेवोचितम्। एतदेव ध्वनयतोक्तम्। कथंचिदिति। यत्तु इदं समर्थनं विचारचिन्तामणिश्लोकोत्तरार्द्धीयस्येति। तन्न। तत्रोत्तरपदस्य तदर्थलाक्षणिकत्वे तद्विशेष्यकबो
धे चोपसर्जनत्वासंभवेनात्वादिसिद्ध्ये ज्ञापकोपन्यासवैयर्थ्यापत्तेः। लाक्षणिकतामात्रेणोपसर्जनत्वाभावाद्विशिष्टस्य लाक्षणिकत्वे तूत्तरपदप्राधान्यमिति तदुक्तिविरोध
दित्यूह्यम्। नन्विदं भाष्येनोक्तमत आह। उपेयेति। लक्ष्ये इत्यर्थः। एवं समर्थनेऽप्यत्रासाधुत्वमेव मुनित्रयसंमतेर्हि एवं शब्दानां साधुत्वस्य सर्वसंमतत्वादिति बोध्यम्। वदन्ति
ति। विचारचिन्तामणिकृदितिभावः ॥

यत इति। यतोवधारितं ततो ध्वनयतीत्यन्वयः। संबोधनान्तम्। अत्र संबोधनपदं यद्यत्तत्क्रियाया विशेषणमिति हरियुक्तिः प्रमाणम्। कृत्वोर्थाः क्रियाजन्मगणने तद्विधानात्। कारकं
म्। कर्त्रादि षट्कम्। क्रियाजनकस्यैव कारकाधिकारेण कर्त्रादिसञ्ज्ञाविधानात्। प्रथमो वतिः। तेन तुल्यं क्रिया चेद्वतिरिति विहितः। असमस्तनञ्। प्रसज्यप्रतिषेधार्थक इति शेषः।
अत एव प्रसज्यप्रतिषेधे समर्थसमास इति तत्र तत्र भाष्यकृता। एतत्। असमस्तनञः क्रियान्वयित्वम्। वचनपुरुषव्यवस्थेति। घटाभावोऽमद्भाव इत्यर्थे एकवचनप्रथमपुरु

यतः। संबोधनान्तं कृत्वोर्थाः कारकं प्रथमो वतिः। धातुसंबन्धाधिकारनिष्पन्नमसमस्तनञ्। १। तथायस्वभावेन षष्ठी चेत्युदितं द्वयम्। साधुत्वमष्टकस्यास्य क्रियये
वान्वधार्यताम्। २। युक्तं चैतत्। त्वं पचसि। युवां पचथ। इत्यादौ नञ्समभिव्याहारे क्रियाया एव निषेधप्रतीतेरनुभवसिद्धत्वात्। भवति प्रयोगेऽपि तथैवन्याय्यत्वात्। घ
टो नास्ति। पटौ न स्तः। अहं तत्र नास्मीत्यादौ वचनपुरुषव्यवस्थादर्शनाच्च। अन्यथार्थाभावेऽव्ययीभावस्य दुर्वारत्वाच्च। यत्तु भूतलाधेयत्वाभाववान् घट इत्यर्थवर्णनं तन्न। क्रि
यानन्वये कारकविभक्तेर्दुर्लभत्वात्। तस्मात्कारकविशिष्टक्रियाया नञर्थेऽन्वयः शाब्द इत्येव तत्त्वम्। भाष्यवार्तिके त्र्युपलक्षणम्। सांप्रदायिकरीत्या पूर्वपदार्थप्राधा
न्येऽव्ययीभावः। उत्तरपदार्थप्राधान्ये तत्पुरुष इति विषयविवेकस्य सुलभत्वात्। यत्तु वदन्ति। यद्वाऽभावसामान्ये नञ् वर्तते तदाऽव्ययीभावः। अभावविशेषविवक्षा
यां तत्पुरुष एव। तस्य नञर्थत्वाभावेन पूर्वपदार्थप्राधान्यासंभवादिति। तन्न। पापाभावोऽपापमिति स्वोक्ततत्पुरुषोदाहरणेऽपि अभावत्वेनैवाभावभाने नाव्ययीभाव
स्य दुर्वारत्वात्। यदपि विशेषस्य नञर्थत्वं नास्तीति। तदपि न। निर्विशेषस्य सामान्यस्याभावात्। विशेषणरूपेण वाच्यत्वं नास्तीति चेत् ॥

यपोरेवापत्तिरिति भावः। अन्यथा। घटाभावबोधे। वचनपुरुषव्यवस्थावदिदमपि दूषणमित्यर्थः। कारकविशिष्टक्रियाया इति। भूतले घटो नास्तीत्यादौ भूतलाधिकरणकघ
टकर्तृकसत्ताभाव इति बोध इति भावः। पूर्वपदार्थप्राधान्ये इति। असंहितमित्यस्य संहिताभाव इत्यर्थात्। असंदेहा इत्यत्रारोपितसंदेहो निश्चय इत्यर्थः। इति बोधे तदभावप्रती
तिरर्थाभेदेन धर्मिण आरोपात्। एवमनुपलब्धिपदेऽपि बोध्यम्। न्यायसिद्धे एवं च लिङ्गदर्शनं मूलोक्तमिति तत्त्वम्। अभावसामान्य इति। अत्यन्ताभावत्वादिना बोधाविषयो भावत्वे
न बोधविषयश्च सामान्यमित्यभिमानस्तेषाम्। अव्ययीभाव इति। नत्रात्यन्ताभावत्वेनैव बोधादिति भावः। नशब्देनेतीति। निषेधार्थनाशब्देनेत्यपि बोध्यम् ॥

इत्येवेति। अत्र नञा नशब्देन चैकशब्दस्य समासस्तत्र नो धा। प्रकारेनेकसंख्यात्वप्रतीतेः। एकप्रकारेणानन्तर्यान्वयाननुभवाच्च। एवमेव नैकरूपो रुद्रादुरिति विष्णुसहस्रनामप
ठ्येऽनेकरूप इत्यर्थे नैकशब्देन रूपशब्दस्य बहुव्रीहिर्बोध्यः। गतिसंज्ञाविकल्प इति। तत्फलं समासविकल्पः। कथमिति। गतित्वे तु प्राग्धातोरिति धातोः प्रागेव प्रयोगः स्यादिति
तर्हि भविष्यामित्यादिरव्ययीभावो दत्तजलाञ्जलिरेव स्यादिति न किञ्चिदेतत्। नञो न लोप इति। तिङन्तेन समासाभावाद् प्राप्नोव वचनम्। अपचसीति। कुत्सितं पचसीत्यर्थः।
नशब्देनेति। नञा समासे त्वनेकधेत्येव भवतीति भावः। ऊर्यादिच्विडाचश्च। च्विडाचौ कृभ्वस्तियोगे विहितौ ऊर्यादयोऽपि स्वभावात् तत्रैव प्रयुज्यन्ते। तत्रापि आविः प्रादुःश
ब्दौ मुक्त्वान्येषां करोतिनैव योग इति माधवादिग्रन्थे स्थितम्। तथैवोदाहरति। ऊरीकृत्येति। आविःशब्दस्य तु साक्षात्प्रभृतिषु पाठात् कृञो योगे गतिसंज्ञाविकल्पः। भ्व
स्तियोगे तु अनेन नित्यमिति विशेषः। कथं तर्हि वारुणीमदविशङ्कमथाविश्चस्तु षोः भवदसावितरागम इति माघः। अभवद्युगपद्विलोलजिह्वायुगलीदोभयसङ्कुभा
वमाविरिति च। निरङ्कुशाः कवय इति हरदत्तः। वस्तुतस्तु ते प्राग्धातोरिति सूत्रस्य प्रयोगनियमार्थत्वे प्रकृतेऽनुपपत्तावपि संज्ञानियमार्थत्वपक्षे दोषलेशोऽपि ना
स्तीति प्रपञ्चितं शब्दकौस्तुभे। एतेन पुरो रामस्य जुहवाञ्चकार ज्वलने वपुरिति भट्टिर्व्याख्यातः। हतं परिगृह्येति। हत्वा गमनं द्विधा हतं त्यक्त्वा परिरक्षव्येति। आ
द्यमुदाहरणं द्वितीयं प्रत्युदाहरणम्। अपरिग्रह इति च प्रयोगोपाधिर्न तु वाच्यकोटिनिविष्टमिति भावः। कणेहत्येति। अतिशयेनाभिलष्य तन्निवृत्तिपर्यन्तं पि
बतीत्यर्थः। ततश्च श्रद्धाया अवगमात् तत्प्रतिघातो गम्यते। प्रत्युदाहरणं तु कणे हत्वा गतः। सूक्ष्मस्तण्डुलावयवः कणस्तस्मिन् हत्वेत्यर्थः। पुरस्कृत्येति। नमस्तु
रसोरिति सत्वम्। कथं तर्हि अमुं पुरः पश्यसि देवदारुमिति। स्थितमित्यध्याहारेण दर्शिप्रत्यगतित्वात् ॥

भावः। प्रयोगनियमेति। गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्या इति तदर्थः। संज्ञानियमेति। धातोः प्राक्प्रयुक्तानामेव गत्यादिसंज्ञा नान्येषामिति तदर्थः। अयमेव पक्षो युक्त
लाघवादिति भाष्ये स्पष्टम्। प्रयोगोपाधिरिति। ल्यबन्तप्रयोगयोग्यत्वं पश्चान्मानसबोधविषयमित्यर्थः। श्रद्धा। अभिलाषातिशयः ॥

एतेनेति। पुर इति कौतुके इत्यनेनान्वेति। तस्य च न क्रियावाचकत्वम्। तस्येत्यस्य समीप इति शेष इति भावः। सञ्ज्ञानियमपक्षे तु शङ्के यनेति भावः। माधव इति। विभाषेति सूत्रे ऽन्तर्भावित्यस्य निवृत्त्यापि तत्सिद्धिरित्यन्ये। इहेति। तेन नियचने कृत्वेति सिद्धम्। गतार्थेरत्निमिति। प्रशब्दादेरिति भावः। नित्यसमासतामिति। तेनान्तोदात्तादुत्तरपदाद् नित्य

एतेन तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतोरिति व्याख्यातम्। अस्तं च। अव्ययमिति किम्। अस्तं काण्डं प्रक्षिप्तमित्यर्थः। अदः कृत्वेति। यदास्य प्रमेत्र पर्यालोचयति तदेदमुदाहरणम्। तिरोऽन्तर्धौ। अन्तर्धौ किम्। तिरोभूत्वा स्थितः। पार्श्वतो भूत्वेत्यर्थः। विभाषा कृञि। तिरः कृत्वेति। गतित्वाभावपक्षे सत्वमपि न। तिरसोऽन्यतरस्यामिति सत्वविधौ गतिग्रहणानुवृत्तेः। केचित्तु पराभवे तिरस्कारशब्दप्रयोगमनुरुन्धानाः सत्वविधौ गतिग्रहणं निवर्तयन्तीति माधवः। वाचंनियम्येति। नियच्छनेहि वचनाभावः। अर्थाभावेऽव्ययीभावः। इहां विशेषेण एदन्ततानि पात्यते न तु सञ्ज्ञासंनियोगेन। प्रगत आचार्य इति। अनेन गतार्थे वृत्तिमस्य पदस्य विग्रहेण नित्यसमासतां च दर्शयति। अतिमाल इति। एवमभिगतो मुखमभिमुखः। उद्गतो वेलामुद्वेलः। प्रतिगतोऽक्षं प्रत्यक्षः। उपपदमतिङ्। अतिङिति नोपपदस्य विशेषणं किंतु समासस्य। एतच्च अनवक्लृप्त्यमर्षयोरिति सूत्रे भाष्ये एव स्पष्टम्। तत्र हि किंवृत्तस्यानधिकारादकिंवृत्तग्रहणानर्थक्यमित्युक्त्वा उपपदसञ्ज्ञार्थं तर्हीत्याशङ्क्य तिङि नित्समासप्रतिषेधात्सञ्ज्ञानर्थक्यमिति सिद्धान्तितम्। नदेतदभिप्रेत्याह। अतिङन्तश्चेति। ननु सुपेत्यधिकारात्तिङन्तेन न भविष्यति तत्राह। अतिङ्ग्रहणमिति। पूर्वसूत्र इतिः कुगतिप्रादयः सुबन्ताः सुबन्तेन समस्यन्ते। ततः गतिः। गतिः सुबन्तोऽतिङन्तेन समस्यत इति व्याख्येयमित्यर्थः। तथा चेति। पद्मप्युक्तरीत्या गत्युपपदयोरेव लाभस्तथापि त्रितयविषयिणी प्राचां परिभाषा एकदेशानुमतिद्वारा इहापि ज्ञाप्यत इति भावः ॥

ऽसमासे इत्यनेनानित्यसमासे यदुत्तरपदं सावेकाजन्तोदात्तं ततः परा तृतीयादिर्विभक्तिरुदात्ते त्यर्थकेन न विभक्त्युदात्तत्वम्। एतेन शकपार्थिवादित्वादिष्टं सिद्धमित्यपास्तमिति भावः। ज्ञाप्यत इति। अतिङ्ग्रहणकरणेन तदर्थस्य सह एतस्य बोध्यत इत्यर्थः ॥

उक्तार्थसाधकमिति। सुबुत्पत्तेः पूर्वं समासो बहुलग्रहणादिति भावः। सुबुत्पत्तेरित्युपलक्षणम्। स्त्रीप्रत्ययोत्पत्तेः प्रागित्यपि बोध्यम्। अनुवर्ततइति। इपरत्नकतयान्वयसंभवा द्दोषाभावाद्वेति भावः। उपपदमिति महासञ्ज्ञया सुबन्तस्यैवोपपदत्वात्। अत एवेति। सुबुत्पत्त्यनन्तरमेव तेन समासादेवेत्यर्थः। आङो रिति। आङो मस्त्वे विशब्दस्य प्रशब्देन तद न्तेन प्रशब्देन गतिसमासस्स्यादिति। आङा तूपपदसमास एव। आतश्चोपसर्गे इति सप्तमीनिर्देशात्। उपसर्गत्वपर्यायाधिकरणस्यैकस्यैवोपपदत्वादिति कश्चित्। तन्न। गतिसमासेनसि

यद्वाकारकांशे कर्तृकरणे कृतेति सूत्रस्य बहुलग्रहणमुक्तार्थसाधकं बोध्यम्। प्रागिति। कृदन्तादुत्तरपदात्सुबुत्पत्तेः प्रागित्यर्थः। प्रथमान्तं सुब्ग्रहणमिहानु वर्तत एव। अत एव राजदर्शीत्यादौ पूर्वपदे नलोपादि पदकार्यं सिद्ध्यति। परिभाषायाः फलं दर्शयन् गतिमुदाहरति। व्याघ्रीति। व्याजिघ्रतीति व्याघ्री। आतश्चोप सर्गे इति कः। पाघ्राध्मेति शप्रत्ययस्तु सञ्ज्ञायामिति वक्ष्यते। आङोर्प्रशब्देन गतिसमासः सयदि प्रशब्दस्य सुबन्ततामपेक्षेत तर्हि सुबुत्पत्तेः पूर्वं समास त: प्रागेव लिङ्गयोगः लिङ्गनिमित्तस्य प्रत्ययस्य चैवस्यान्न तु ङीष्। प्रशब्दमात्रस्य जातिवाचित्वाभावात्। ततो घ्राशब्देन समासे सति अदन्तत्वाभावाज्जातिलक्ष णो ङीष् न स्यादिति भावः। उपपदमुदाहरति। कच्छपीति। कच्छेन पिबतीति कच्छपी। व्याघ्रीवत्सुपीति योगविभागात्कः। यत्तु प्राचा उपपदमतिङन्तमि ति व्याख्यातं तन्न। तथा सति प्रथमान्तसुब्ग्रहणनिवृत्त्या बहुविप्लवापत्तेः। तथाहि। निर्गत इत्यत्र निसो रुत्वं संयते त्यत्र मोनुस्वारः राजदर्शीत्यादौ नलोपश्च न स्यात् ॥

ॐ इत्वात्तत्रोपपदसञ्ज्ञाया एव फलाभावेनाभावात्। अत एव कर्मण्यणिति सूत्रे नुपपदत्वेनायं व्यवहृतो भाष्ये। व्याङोश्च क्रमेण घ्रशब्देन तदन्तेन च गतिस मास इत्यक्षरार्थः। कच्छेनेति। अधिकरणस्य करणत्वविवक्षया तृतीया। न च कारकत्वात्सिद्धम्। कारकत्वेप्युपपदत्वाहान्या परत्वादुपपदसमासस्यैव प्रवृत्तेः। उपपदमिति महास ञ्ज्ञामाश्रित्य प्रथमान्तस्य निवृत्तिरुच्यते उत तदनाश्रित्य। नाद्यः। तदाश्रयणे त्वतन्निवृत्त्या ग्रैमण्डूकानुवृत्त्याश्रयणे गौरवात्। नान्त्य इत्याह। तथा सतीत्यादि ॥

प्रादिनेति। गतिरिति सूत्रे पितदसंबन्धेऽयं दोषः। एवं निर्गतः संपन्नेरिति च प्रत्युक्तमिति। सुबित्येतत्संबन्धे नैव तद्व्यावृत्तावतिङ्पदस्यैव वैयर्थ्यापत्तेरित्यभिमानः। शे
षीकृतेनेति। भाष्यकृतेति शेषः। कथमिति। संहितायामित्यत्वादिति भावः। दिगिति। दिगर्थस्तु यदि सुबित्यनुवृत्त्यैव एधानाहरको व्रजतीत्यस्य व्यावृत्तिसिद्धावतिङ्ग्रह
णमेवोभयोर्निवृत्तौ ज्ञापकम्। महासञ्ज्ञाकरणाच्च राजदृषीत्यादौ न दोषः। सुप्यजाताविति णिनेः सुबुत्पत्तिं विनाऽसंभवेन तं विनोपपदत्वाभावेन दोषाच्च। निर्गतदृत्या
दौ शब्दान्तरसंबन्धात् पूर्वं सुबन्तत्वे लुकि च पदत्वोत्तरं पदान्तरसंबन्धेन समासेन क्षतिः। माङि लुङि त्यादौ सन्निसप्तमीति नोपपदत्वम्। फलाभावाच्च। प्रथमार्थे सौत्री

प्रादिते त्यादौ अतो गुण इति पररूपं च स्यात्। एनेनातिङ्ग्रहणम्। एधानाहरको व्रजतीति प्रत्युदाहरणमपि प्रत्युक्तम्। यदपि कुगतीति सूत्रे उक्तम्। अत्र
सुप्सुपेत्यननुवृत्तेस्तिङापि समासः। इरीकरोतीत्यादि। तदप्यसत्। तत्र शेषीकृतेनातिङ्ग्रहणेनैव विरोधात्। तिङ्समासस्तु सहेति योगविभागब
लभ्यश्छान्दसश्चेतिं प्रागेवोक्तम्। लोके तु प्रभवतीत्यादौ उपसर्गः पृथक्पदमेव। काव्यादिपाठिनामेकपदभ्रमे तु धातूपसर्गयोः संहितायां नित्यत्वं मूल
म्। कथं तर्हि अग्न आयाहीत्यादौ पदपाठे उपसर्गेऽवसानमिति चेत्। पदपाठस्यापि व्याख्याविशेषतया तत्रानुकरणशब्दत्वेनोपसर्गत्वाभावात्। प्रकृति
वदनुकरणमित्यतिदेशस्य वैकल्पिकत्वाद्यत्तदेतेभ्य इति सूत्रे त्यदाद्यत्वं कुर्वता एक - शेषं चाकुर्वता सूत्रकृतैव तथा ज्ञापितत्वादिति दिक्। अमैवाव्ययेन।
तुल्यविधानमितिं। एतच्चाव्याख्याद्वारेण लभ्यमतद्वेति ॥ ॐ सप्तम्येव हितन्निमित्तम्। अत एव पशावित्यादीनां नोपपदत्वम्। एधानाहरक इत्यादौ तु क्रियार्थोपपदस्ये

तिकार्यार्थमुपपदसञ्ज्ञावश्यकत्वे न तत्रास्य प्रवृत्तिर्व्यावृत्त्यर्थं तच्चरितार्थं ध्वनितं चेदं भाष्ये इत्युच्यते। तदा तु उभयोर्निवृत्तिः। अतिङन्तश्चेत्यस्य अतिङन्ताघटि
तइत्यर्थः। एवं चोपपदमतिङन्तमिति व्याख्यानस्यानवक्लृप्त्यमर्षयोरिति सूत्रस्य भाष्यविरोधो दूषणमिति ॥

उक्तार्थसाधकमिति। सुबुत्पत्तेः पूर्वं समासो बहुलग्रहणादिति भावः। सुबुत्पत्तेरित्युपलक्षणम्। स्त्रीप्रत्ययोत्पत्तेः प्रागित्यपि बोध्यम्। अनुवर्त्तत इति। उपरञ्जकतया च यसंभवा दिरोधाभावाद्वेति भावः। उपपदमिति महासञ्ज्ञया सुबन्तस्यैवोपपदत्वात्। अत एवेति। सुबुत्पत्तेरनन्तरमेव तेन समासादेवेत्यर्थः। व्याङोरिति। व्याङोर्मध्ये विशब्दस्य प्रशब्देन तद्‍न्तेन प्रशब्देन गतिसमासस्तदर्थः। आङस्तूपपदसमास एव। आतश्चोपसर्गे इति सप्तमीनिर्देशात्। उपसर्गत्वपर्यायाधिकरणस्यैकस्यैवोपपदत्वादिति कश्चित्। तन्न। गतिसमासेनासि

यद्वा कारकांशे कर्तृकरणे कृतेति सूत्रस्य बहुलग्रहणमुक्तार्थसाधकं बोध्यम्। प्रागिति। कृदन्तादुत्तरपदात्सुबुत्पत्तेः प्रागित्यर्थः। प्रथमान्तं सुब्ग्रहणमिहानु वर्तत एव। अत एव राजदर्शीत्यादौ पूर्वपदेन लोपादिपदकार्यं सिद्ध्यति। परिभाषायाः फलं दर्शयन् गतिमुदाहरति। व्याघ्रीति। व्याजिघ्रतीति व्याघ्री। आतश्चोप सर्गे इति कः। पाघ्राध्मेति शप्रत्ययस्तु सञ्ज्ञायां नेति वक्ष्यते। व्याङोर्घ्रशब्देन गतिसमासः। स यदि घ्रशब्दस्य सुबन्ततामपेक्षेत तर्हि सुबुत्पत्तेः पूर्वं संख्यापेक्षमात तः प्रागेव लिङ्गयोगः। लिङ्गनिमित्तश्च प्रत्ययष्टाबेव स्यान्न तु ङीष्। घ्रशब्दमात्रस्य जातिवाचित्वाभावात्। ततो घ्राशब्देन समासे सति अदन्तत्वाभावाज्जातिलक्ष णो ङीष् न स्यादिति भावः। उपपदमुदाहरति। कच्छपीति। कच्छेन पिबतीति कच्छपी। व्याघ्रीवत्सुपीति योगविभागात्कः। यत्तु प्राचा उपपदमतिङन्तमि ति व्याख्यातं तन्न। तथा सति प्रथमान्तसुब्ग्रहणनिवृत्त्या बहुविप्लवापत्तेः। तथाहि। निर्गत इत्यत्र निसो रुत्वं स्यात्। तत्र मोनुस्वारः राजदर्शीत्यादौ नलोपश्च नस्यात् ॥

ॐ इत्वात्तत्रोपपदसञ्ज्ञाया एव फलाभावेनाभावात्। अत एव कर्मण्यणिति सूत्रेनुपपदत्वेनायं व्यवहृतो भाष्ये। व्याङोश्च क्रमेण घ्रशब्देन तदन्तेन च गतिस मास इत्यक्षरार्थः। कच्छेनेति। अधिकरणस्य करणत्वविवक्षयात्तृतीया। न च कारकत्वात् सिद्धम्। कारकत्वेप्युपपदत्वाहान्यापरत्वादुपपदसमासस्यैव प्रवृत्तेः। उपपदमिति महास ञ्ज्ञामाश्रित्य प्रथमान्तस्य निवृत्तिरुच्यते उत तदनाश्रित्य। नाद्यः। तदाश्रयणे ऽत्र तन्निवृत्त्याग्रे मण्डूकानुवृत्त्याश्रयणे गौरवात्। नान्त्य इत्याह। तथा सतीत्यादि ॥

प्राटितेति। गतिरिति सूत्रे ऽपि तदसंबन्धे ऽयं दोषः। एवं निर्गतः संपन्नेरिति च प्रत्युक्तमिति। सुबित्येतत्संबन्धेनैव तद्व्यावृत्तावतिङ्पदस्यैव पर्य्यापन्नेरित्यभिमानः। शे
षीकृतेनेति। भाष्यकृतेति शेषः। कथमिति। संहितायामित्यत्वादिति भावः। दिगिति। दिग्गर्भस्तु यदि सुबित्यनुवृत्त्यैव एधानाहरको व्रजतीत्यस्य व्यावृत्तिसिद्धावतिङ्ग्रह
णमेवोभयोर्निवृत्तौ ज्ञापकम्। महासंज्ञाकरणाच्च राजदर्शीत्यादौ न दोषः। सुप्यजाताविति णिनेः सुबुत्पत्तिं विनाऽसंभवेन तं विनोपपदत्वाभावेन दोषाच्च। निर्गतदृत्या
दौ शब्दान्तरसंबन्धात् पूर्वं सुबुत्पत्तेर्लुकि च पदत्वोत्तरं पदान्तरसंबन्धेन समासेनास्तिः। माङि लुङित्यादौ सति सप्तमीति नोपपदत्वम्। फलाभावाच्च। प्रथमार्थे सौत्री

प्राटितेत्यादौ अतो गुण इति पररूपं च स्यात्। एतेनातिङ्किम्। एधानाहरको व्रजतीति प्रत्युदाहरणमपि प्रत्युक्तम्। यदपि कुगतीति सूत्रे उक्तम्। अत्र
सुप्सुपेत्यननुवृत्ते स्तिङापि समासः। दुरीकरोतीत्यादि। तदप्यसत्। तत्र शेषीकृतेनातिङ्ग्रहणेनैव विरोधात्। तिङ् समासस्तु सहेति योगविभागब
ललभ्यश्छान्दसश्चेतिं प्रागेवोक्तम्। लोके तु प्रभवतीत्यादौ उपसर्गः पृथक्पदमेव। काश्यादिपाठिनामेकपद्यभ्रमे तु धातूपसर्गयोः संहितायानित्यत्वंमूल
म्। कथं तर्हि अग्न आ याहीत्यादौ पदपाठे उपसर्गे व्यवसानमिति चेत्। पदपाठस्यापि व्याख्याविशेषतया तत्रानुकरणशब्दत्वेनोपसर्गत्वाभावात् प्रकृति
वदनुकरणमित्यतिदेशस्य वैकल्पिकत्वाद्यदेतेभ्य इति सूत्रे त्यदाद्यत्वं कुर्वता एकशेषं चाकुर्वता सूत्रकृतैव तथा ज्ञापितत्वादिति दिक्। अमैवाव्ययेन।
तुल्यविधानमितिं। एतच्चाध्याहारेण लभ्यत इत्येवेति ॥ ॐ सप्तम्येव हि तन्निमित्तम्। अत एव पशावित्यादीनां नोपपदत्वम्। एधानाहरक इत्यादौ तु क्रियार्थोपपदस्ये
ति कार्यार्थमुपपदसंज्ञावश्यकत्वे न तत्रास्य प्रवृत्तिव्यावृत्त्यर्थं तच्चरितार्थं ध्वनितं चेदं भाष्ये इत्युच्यते। तदा स्तु उभयोर्निवृत्तिः। अतिङन्तग्रहणस्य सतिङन्ताघटि
तइत्यर्थः। एवं चोपपदमतिङन्तमिति व्याख्यानस्यानवक्लृप्त्यमर्षयोरिति सूत्रस्य भाष्यविरोधो दूषणमिति ॥

नियमस्वभावेति। अमैवेति नियमस्वभावलब्धेत्यर्थः। अमैव तुल्यविधानं यदुपपदं तदमैव न समस्यते। अन्येन तुल्यविधानं नेति वचनव्यक्तेरिति भावः। न तु सूत्रस्य
वृत्ति। न तु सूत्रस्य एवा वृत्त्या द्वैधा योज्यत इति भ्रमितव्यमिति भावः। तद्वेति। उपपदमित्यर्थः। अग्रेभोजमिति। विभाषाग्रे प्रथमेति सूत्रेण क्त्वोऽपि विधानान्नास्यामैव तु
ल्यविधानता। अग्रेभुक्त्वेत्यादावमन्तेन समासाभावान्न तस्य नियमविषयतेति भावः। उत्तरपदप्रकृतिस्वर इति। उत्तरपदाद्युदात्तत्वमित्यर्थस्तदाह। आदिर्णमुलीति।

नियमस्वभावत्वार्थकथनपरोयमेवकारो न तु सूत्रस्थः। अव्ययेनेति किम्। कुम्भकारः। असति ह्यव्ययग्रहणेऽमैव यत्तुल्यविधानं तदेव समस्येत। पूर्वसू
त्रारम्भसामर्थ्यादव्ययविषयक एव नियम इति चेत्। तर्हि अमन्तविषयक एव किं न स्यात्। अमन्तेन यः समासः सोऽमैव तुल्यविधानस्येति। तथा च अग्रेभोज
मित्यत्र मा भूत्। अग्रेभुक्त्वा कालो भोक्तुमित्यत्र तु स्यादेवेति भावः। तृतीयाप्रभृतीन्यन्यतरस्याम्। उभयत्रविभाषेयम्। अमैव तुल्यविधानस्य प्राप्ते यथा उपदं
शस्तृतीयायामिति। यत्तु अमा चान्येन तुल्यविधानं तस्याप्राप्ते यथा अव्यये यथाभिप्रेताख्यान इति उच्चैःकारमाचष्टे। इह समासपक्षे कृदुत्तरपदप्रकृतिस्वर आदि
र्णमुल्यन्यतरस्यामित्याद्युदात्तत्वम्। असमासे तु उच्चैरित्यन्तोदात्तत्वम्। स्वरादिषु तथा पाठात्। अमेत्यनुवृत्तिमभिप्रेत्याह। अमन्तेनेति। तेनेह न। पर्याप्तो भो
क्तुम्। तत्पुरुषस्याङ्गुलेः। समासान्तापेक्षया अवयवषष्ठी। द्व्यङ्गुलमिति। द्विगोर्नित्यमिति द्वयसचो लुक्। द्वन्द्वार्थमिति। तत्पुरुषस्यासंभवादिति भावः ॥

अमैवाभ्यस्तानामिति नानुवर्तत इति मतं द्वन्द्वम्। यद्यपि लित्स्वरणमुल्स्वरयोरत्राविशेषः। आदिर्णमुलीति लित्स्वरेण काजर्यं तथापि अभ्यस्तानामित्यनुवृत्त्यभावपक्षे परत्वादिदं न्याय्यमित्य
भिमानः। लितीत्यनेनापीदं सुसाधम्। अन्तोदात्तमिति। फिट्स्वरेणेति भावः। तदाह। स्वरादिष्विति। त्रैस्वर्येण पाठपक्षे इति भावः। समासान्तापेक्षयेति। तत्पुरुषस्य समासस्यान्तावयव इ
त्यर्थः। समासान्ताः इति सूत्रे समासेति लुप्तषष्ठीकं बोध्यम्। द्वयसच् इति ऊर्ध्वमानत्वे इदम्। प्रमाणत्वे तु मात्रचोऽपि लुगिति बोध्यम् ॥

नन्वेवं प्रकरणविरोधस्तत्राह। हेमन्तेति। चौ हेतौ। यतो द्वन्द्वे दर्शनमतो गौणग्रहणायोग इत्यर्थः। स्पष्टं चेदं द्वन्द्वार्थत्वं भाष्यकृतोक्तम्। एकवद्भावादिति। समाहारद्वन्द्वत्वादित्यर्थः।
आकरेति। पुंलिङ्गस्यैवात्रोदाहरणादित्यर्थः। रात्राह्नाहा इति पुंस्त्वे प्राप्ते आह। संख्यापूर्वमिति। स्पष्टार्थ इति। विपरीतनियमस्यास्पष्टं वारणायेत्युक्ते ध्वनयनक्लेशेन तद्वारणमा
हा। अह्न एवेति लिङ्गादिति। अह्न एवेति नियमे तद्द्वैयर्थ्यं स्पष्टमेव। नियमफलत्वाद्द्विकमिति। अह्नां निर्वृत्तमित्यर्थे कालादित्यनुवृत्तौ तेन निर्वृत्तमिति ठञ्। असंभवादिति। यद्य

नन्वहश्चासौ रात्रिश्चेति कर्मधारयोऽस्तु। पूर्वोत्तरपदयोरन्यतरस्य गौणत्वसंभवादिति चेत्। न। मुख्यसंभवे गौणग्रहणायोगात्। हेमन्तशिशिरावहोरात्रे च च्छन्द
सीति सूत्रे द्वन्द्वे समासान्तदर्शनाच्च। अहोरात्र इति। जातिरप्राणिनामिति समाहारद्वन्द्वः। रात्राह्नाहा इति पुंस्त्वम्। यत्तु प्राचोक्तमेकवद्भावात्क्लीबतेति। तन्न। सनपुंस
कमित्यस्य रात्राह्नाहाः पुंसीति पुंस्त्वेन परत्वात् बाधं इति वक्ष्यमाणत्वात्। आकरविरोधाच्च। द्विरात्रमिति। संख्यापूर्वं रात्रं क्लीबमिति वक्ष्यते। अह्नष्टखोरेव। नस्तद्धिते इत्यस्य वसि
द्धे नियमार्थमिदम्। एवकारः स्पष्टार्थः। अह्न एव टखयोरिति विपरीतनियमस्तु न भविष्यति। आत्माध्वानौ ख इति प्रकृतिभावविधानाल्लिङ्गात्। अनित्यत्वादिति। अत्र चलि
ङ्गम् शक्तिलाङ्गलाङ्कुशेत्यत्र घटीग्रहणम्। अह्नोऽह्न एतेभ्यः। अह्नः सर्वेति सूत्रे अहरादयो निर्दिष्टाः। चकारेण संख्यान्ययेऽनुकृते। तत्र सर्वैकदेशसंख्याता विशेषेऽपि अह्नः श
ब्दग्रहणं गृह्यते। संभवादित्याशयेनाह। सर्वादिभ्य इति। समासान्ते पर इति। प्रकरणबललभ्यमेतत्। प्राचा तु टचि पर इति व्याख्यातं तदपि सामर्थ्यलभ्यमिति कथंचि
ज्ञेयम् ॥

ॐ पि ब्रह्मणोऽह्न इदमवयवीभूतमहरित्यर्थे षष्ठीसमासः संभवति तथाप्यत्र सूत्रेऽह्नः सर्वैकदेशसंख्यातपुण्याच्च रात्रेरित्यनुवृत्तेऽवसिद्धे एतेभ्य इत्युक्त्वा अव्य
यानामहः शब्दभिन्नानामेव ग्रहणं स्यादिप्रामाण्यादिति बोध्यम्। तस्यानभिधानाच्च। प्रकरणेति। तल्लब्धस्य सप्तम्या विपरिणाम इति भावः। सामर्थ्येति। अहन्शब्दान्ततस्
त्व एव विधानादिति भावः। कथंचिदिति। शब्दतोऽनुपस्थितत्वाद्वाक्यार्थान्वयित्वाऽसंभव इति भावः ॥

ठञोलुकीति। निष्कादिभ्यः समासे ठकोऽप्राप्तेरिति भावः। निष्कस्य परिमाणत्वेदम्। उरोभूषणादिवाचित्वेऽसमासे इति सूत्रे परिमाणवाचिनिष्कादीनामेव ग्रहणे तु ठकोलुकी
ति बोध्यम्। न च द्विनिष्केत्यत्र निष्कस्य परिमाणत्वे द्विनिष्कीति ङीपैव भवितव्यम्। उन्मानत्वेऽपि उन्मानस्य चेह द्विस्तकम्बल्ययोरेव निषेध इति नियमेन ङीबेव प्राप्नोति। एवं च द्वि
बिस्तेत्यत्र बिस्तादिप्रतिषेधेन ङीबभावो न तु ठञो काराभावादिति वाच्यम्। निष्कशब्द उन्मानवाची बिस्तादयः परिमाणविशेषा एवेति मतमनुसृत्य हरदत्तादिभिराकरेत यो
केरित्याशयात्। तदा हि अपरिमाणान्तत्वाद्द्विगोरिति ङीपि निषिद्धे पिठजन्तत्वात्ताप्रसक्तरीत्यैव वारणात्। एतेन द्विबिस्तेत्यपि व्याख्यातम्। न चैवमपरिमाणेति निषेधोऽनर्थः स्या

अत एव हि द्विनिष्केत्यत्र क्रीतार्थे प्राग्वतीयस्य ठञो लुकि टाबेवाकरे उदाहृतः। द्विबिस्तेत्यादावप्येवम्। नापि तृतीयः। टचः समासान्तत्वात् तदन्तस्य तद्धि
तार्थत्वं प्रत्युपसर्जनत्वादत एव हि आपिशलिना प्रोक्तमधीयाना ब्राह्मणी आपिशलेत्युदाहृतम्। भाष्यमते अचाट चोबाधनाच्चानापि चतुर्थः। अपरिमा
णेत्यादिना ङीपो निषेधात्तस्मात् टाबेव युक्तः। स्यादेतत्। टाबप्ययुक्तः स्त्रीत्वस्यैव दुर्लभत्वात्। तथा चाहोऽह्न एतेभ्य इति सूत्रे कैयटहरदत्तावाहतुः रात्रा
ह्नाहाः पुंसीति वचनात् स्त्रियां रूपाभावात् ठजयोनास्तीह विशेष इति। मैवम्। भावानवबोधात्। इत्थं हि कैयटाद्याशयः सर्वादिपङ्क्तपूर्वादह्नष्टजपवादो
ज्विहितः ॥

ण्ड तत्सामर्थ्येन तदभावकल्पनायेह्यान्यायसिद्धोक्तरीत्यैव तद्वारणस्योचितत्वात्। तेनापि वदर्थबोध स्यैवौचित्यात्॥ तदन्तस्येति। त
दन्तार्थस्येत्यर्थः। उदाहृतमिति। अनुपसर्जनादिति सूत्रे वार्तिककारैरिति शेषः। चतुर्थः। द्विगोरिति ङीबित्येवंरूपः। ननु बह्वादिगणे ह्नन्शब्दपाठाद्दीर्घोह्नीत्यादा
वनुपसर्जने ङीपि वात्रापि स्यादिति चेन्न। समासान्ते कृतेऽह्नन्शब्दत्वाभावात्। तस्मात् टाबेवेति। अस्य स्त्रीत्वमङ्गीकुर्वतां मत इति शेषः। अत स्तन्मतमाशङ्क्य पूर्वकमु
पपादयति। स्यादेतदित्यादिना ॥

स्त्रीत्वसंभवेपीति। एत्राह्नाह्न इत्यस्य रात्राह्नशब्दघटितसमाससमात्रार्थनिमित्तलिङ्गस्यान्तरङ्गस्य सार्वत्रिकस्य च बाधेनोपपत्तौ बहिर्भूततद्धितार्थनिमित्तलिङ्गबाधकत्वेमाना
भाव इति भावः। पुण्याहमित्यत्र उत्तमैकाभ्यां चेत्यह्नादेशनिषेधात् पुण्यसुदिनाभ्यामह्नः क्लीबत्वस्य सत्त्वाच्चेत्याशयेनाह। चतुर्णामिति। परत्वादिति। अह्नाह्नान्ता इत्यपेक्ष
तत्र संख्यापूर्वस्य तद्धितार्थद्विगोर्विशेष्यनिघ्नत्वेन स्त्रीत्वसंभवेपि टजन्तस्य तद्धितं प्रत्युपसर्जनत्वात्। अनुपसर्जनाधिकारोक्तस्य टिड्ढेति ङीपः प्राप्तिरेव नास्तीति
तत्र टजचोर्विशेषः स्पष्ट एव। पुण्याहमित्यत्र तु उत्तमैकाभ्यां चेत्यचो निषेधः। अह्नादेशस्यैवेति मतभेदेन व्यवस्थितम्। इतरेषां चतुर्णां रात्राह्नाहा इति वचनात् स्त्रियां वृ
त्तिर्नास्तीति। स्यादेतत्। भवेदेष वृद्धानामाशयः। यदुक्तं द्विगोर्विशेष्यनिघ्नत्वे प्रमाणं स्यात्। तदेव किमिति चेत् ॥ उच्यते। अमरसिंहेन पुंस्त्वे सभेदानुचराः सपर्यायाः
सुरासुरा इति पुंस्त्वाधिकारे अह्नाहान्ताः स्वेडभेदा रात्रान्ताः प्रागसंख्यका इत्युक्तम्। अर्धान्ताः प्राध्वलं प्राप्ताः पन्न पूर्वाः परोपगाः। तद्धितार्थे द्विगुः संख्याः सर्वनामतदन्त
का इति च। ततः परमुक्तम्। एवं चेह अह्नाहान्ता इत्यनेन पुंस्त्वं प्राप्तं तद्धितार्थे द्विगुरिति परोपगत्वेन परत्वादेव बाध्यते। तथा च तेनैव परिभाषितम्। परं विरोधे शेषं तु
ज्ञेयं शिष्टप्रयोगत इति। तस्मादमरग्रन्थः उक्तार्थे प्रमाणम्। किंच परवल्लिङ्गमित्यस्य रात्राह्नाहा इत्यपवादः। यत्र तु द्विगुप्राप्तेत्यादिनोक्तगौनिषिद्धः। तत्र तदपवाद
स्याप्रवृत्तिः स्पष्टैव। एतच्च माधवेनापि ध्वनितमित्यनुपदमेव वक्ष्यामः। किंच भवाद्यर्थे तद्धितान्तं परोपगमिति निर्विवादम्। तद्धितलोपे तु यः शिष्यते स लुप्यमानार्थो
भिधायीति न्यायेन भवाद्यर्थवत् स्त्रीत्वादेरप्यभिधानं न्याय्यमेव। प्रकृतेर्लिङ्गानुशासनस्य केवलायां प्रकृतावुपक्षीणस्य लुप्ततद्धितायामप्रवृत्तेः। लुपि युक्तवदिति लि
ङ्गातिदेशोप्यत्र प्रमाणम्। प्रकृतलिङ्गानुशासनानां लुप्तप्रत्ययेषु प्रवृत्तौ तद्वैयर्थ्यापत्तेः। अत एव लवणः सूपः लवणा यवागूः इत्यादौ न क्लीबत्वम्। अत एव च कुमारीब्रा
ह्मण इत्यादिषु आचारक्विबन्तप्रकृतिककर्तृक्विबन्तेष्वपि विशेष्यनिघ्नतैवाकरे स्पष्टा ॥
यात तद्धितार्थे द्विगुरित्यस्य परत्वादिति भावः। तदाह। तथा चेति। केवलायां प्रकृतौ। सर्वाह्न इत्यादौ ॥

अलंबहुनेति। एतेन स्त्रीत्वमेव नास्तीति सूचितम्। तथाहि। रात्राह्नाहाः इत्यनेन बहिर्भूततद्धितार्थनिमित्तलिङ्गबाधकल्पने उपस्थितरात्राह्नाहशब्दार्थविशेष्यत्वप्रयु
क्तप्राप्तिकलिङ्गस्यैव बाधः स्यान्न तु बहिर्भूतसमाहारविशेषणत्वप्रयुक्तप्राप्तिकस्यापि अतो नान्तरङ्गन्यायाप्राप्तिः। किंच प्राद्यलमित्यादिवाक्यस्यापि कोपे परत्वात्तेना
द्व्यह्नादिविषये पुंस्त्वबाधापत्तौ परवल्लिङ्गमिति सूत्रे एकदेशिग्रहणं कृत्वा भाष्यकृता कृतस्य द्विगुप्राप्तेति वार्तिकप्रत्याख्यानस्यासंगत्यापत्तिः। तत्र रात्राह्नेत्यादिकथा
र्थं तस्यावश्यकत्वात्। न चेदमप्येकदेशिसमासविषयकमेव। अत्रत्याहर्ग्रहणस्य पुण्यसुदिनाभ्यामित्यादेश्चैवैयर्थ्यापत्तेः। अतिरात्रः सर्वाह्न इत्याद्यसिद्ध्यापत्तेश्च

द्व्यह्नीति ङीपं बदता प्राचाऽपि स्त्रीत्वं स्वीकृतमेवेत्यलं बहुना। यदि समर्थनीयमेवेत्याग्रहस्तर्हि आधाराधेयभावव्यत्यासेन समर्थ्यताम्। द्वे अहनी य
स्यामिति दिनद्वयाधारभूतेत्यर्थलाभात्। उपान्त्यस्यापीति। यथा प्रथमयोरिति प्रथमाद्वितीययोर्ग्रहणं द्विवचननिर्देशात्। तथेहापि उत्तमग्रहणसामर्थ्या
दन्त्ययोर्ग्रहणम्। उत्तमौ च एकश्चेति विग्रहे सौत्रं द्विवचनमिति तेषामाशयः। खार्याः प्राचाम्। द्विगोरिति। खारीशब्दान्तात् द्विगोरित्यर्थः। द्व्यञ्जलमि
ति समाहारे द्विगुः। आन्महतः। पदाधिकारे तदन्तस्यापि ग्रहणान्महच्छब्दान्तस्यापि ॥

। एवं चोत्सर्गस्य परवल्लिङ्गस्य द्विगुस्त्रियामित्यादि निषेधे तद्विषये तदपवादस्याप्यप्रवृत्तिरिति निरस्तम्। अहरतिक्रान्ता रात्रिरित्यर्थे समासस्य स्त्रीलिङ्गत्वात्तत्र टजचो ङी
प्दाद्वर्याविशेषसत्त्वेन नास्ति टजचोर्विशेष इति कैयटासंगतिश्च। तस्मात् प्राद्यलं प्राप्नेत्यादिस्तद्धितार्थे द्विगुरिति कोशाश्चान्ह्नाहान्ताद्यतिरिक्तविषय एव न्याय्य इति दिक्।
द्वे अहनी यस्यामिति। बहुव्रीहौ रात्राह्नाहाः इत्यस्याप्राप्तेरिति भावः। बव्हादिषु अहः शब्दपाठादुपसर्जनत्वेऽपि ङीषुक्तस्यापीति। तेन परममहाबाहुः सिद्धः। अपाणिनीयत्वादि
ति। पास्तादिषु महत आत्वं पुंवत्कर्मधारयेति कृतोऽस्ते रितिभावः। आन्महत इत्यत्र लिङ्गविशिष्टपरिभाषाभावस्यङ्याप्प्रातिपदिकादिति सूत्रे भाष्ये उक्तत्वेन पुंवद्भावात्परत्वात्टाब[illegible]

अतिरभसीमिति। आर्द्रीप्रैलपस्येवतेनलुकोविधानादितिभावः। द्वन्द्वेनेति। राजन्यबहुवचनद्वन्द्वेद्व्यनुवर्तमानेसंख्येत्यनेनपूर्वपदप्रकृतिस्वरस्यतत्राप्राप्तेरित्यर्थः। प्रक्रम

कथंतर्हिपरममहत्परिमाणमिति। परममहतोद्रव्यस्यपरिमाणमितिषष्ठीतत्पुरुषइतिवृद्धाः। यत्तुवर्द्धमानेनोक्तम्। इष्टकेषीकामालानामित्यत्रतदन्तविद्धु
पसंख्यानेसामर्थ्यादुत्तरपदाधिकारेतदन्तविधिर्नास्तीति। तद्भाष्यकैयटविरुद्धम्। तथाहि। पदाधिकारेप्रयोजनम्। इष्टकचितं पक्वेष्टकचितमित्यादिभाष्ये
उदाहृतम्। कैयटेनचपदशब्देनोत्तरपदंगृह्यतेइतिव्याख्यातम्। एतदेवार्थतःकाशिकायामुपनिबद्धम्। नतुइष्टकेषीकेत्यत्रस्वतन्त्रमुपसंख्यानमस्ति। महतीश
ब्दस्येति। यत्तुप्राचोक्तंजातीयघासादौतीशब्दस्याप्यात्त्ववक्तव्यमिति। तत्रजातीयेतावद्व्यर्थम्। पुंवत्कर्मधारयेतिआन्महतइतिचसूत्राभ्यामेवरूपसिद्धेः। तीशब्दस्ये
त्यपिअपाणिनीयत्वादुपेक्ष्यम्। अष्टनइति। कपालेउत्तरपदेहविषिवाच्येअष्टनआत्त्ववक्तव्यमित्यर्थः। अष्टाकपालइति। संस्कृतंभक्षाइत्यणोद्व्यद्वपूर्वेतिलुगितिव्याच
ख्युः। तदतिरभसात्। द्विगोर्लुगनपत्यइतितुबोध्यम्। द्व्यधिकादिति। एतच्चभाष्यवार्तिकारूढमित्युक्तम्। यत्त्विहपूर्वपदप्रकृतिस्वरसिद्धयेविस्पष्टादेराकृतिगणत्व
शरणीचक्रुस्तच्चिन्त्यम्। उपलभ्यमानस्यतादृशस्वरस्यद्वन्द्वेननिर्वाहात्। स्वरान्तरेऽपीष्टापत्तौबाधकाभावादितिदिक्। एकादिः। अदुकिअकारोच्चारणसामर्थ्यात्स्वररू
पंन। केचित्तुस्पष्टार्थमादुकंदीर्घादिमाहुः। रात्राह्नाहाःपुंसि। परत्वादिति। यत्तुप्राचाएकवद्भावात्क्लीबतेत्युक्त्वाअहोरात्रमित्युदाहृतंतन्नेत्यवोचाम। यत्तुवदन्ति।
रात्रादीनामेवानेनपुंस्त्वंविधीयतेतदन्तस्यतुपरवल्लिङ्गमित्येवसिद्ध्यति। अतएवभिन्नविषयत्वान्नविप्रतिषेधशङ्का। एवंचसमाहारेसनपुंसकमित्येवभवतिपरवल्लि
ङ्गापवादत्वादिति। तन्न। उक्तरीत्याह्यहर्व्यहादावपिक्लीबत्वंस्यात्। नचेष्टापत्तिः। प्राचाअपिद्व्यहस्त्र्यहइत्युदाहृतत्वादाकरविरोधाच्च। अमरोप्याह। तेतुत्रिंशदहोरात्रइति। मा
सेनस्यादहोरात्रइतिच। तस्मात्तदन्तस्यैवायंपुंस्त्वविधिः। द्वन्द्वतत्पुरुषयोरितिप्रक्रमणादितिस्थितम्

णादिति। प्रक्रमादित्यर्थः। प्रकरणादितियावत् ॥

प्रामादिकमेवेति। समाहारद्विगावित्यर्थः। संख्यापूर्वं रात्रमित्यस्य प्रतिप्रसवविधित्वलाघवानुरोधेन समाहारद्विगावेव प्रवृत्तः। भविष्यति मर्यादेति सूत्रे स्थेत्रिंशा
त्रः पञ्चदशरात्र इति भाष्यप्रयोगे तु त्रिंशत् पञ्चदश वा रात्रयो यस्मिन्निति बहुव्रीहिरच् प्रत्ययस्त्वेवेति योगविभागात्समासान्तो बोध्यः। पृषोदरादित्वाद्दकार इति कश्चि

संख्यापूर्वमिति। तथा च लिङ्गानुशासनसूत्रम्। अपथपुण्याहौ नपुंसकौ संख्यापूर्वा रात्रिरिति। अमरोऽप्याह। रात्रं प्राक् संख्ययाऽन्वितमिति। गणरात्रं
निशाबह्व्य इति च। पुंस्त्वाधिकारे स एवाह। रात्रान्ताः प्रागसंख्यका इति। एवं स्थिते द्विरात्रस्त्रिरात्र इति वृत्तिकारहरदत्तादिभिरुक्तं पुंस्त्वं प्रामादिकमेवेत्य
वधेयम्। अर्द्धर्चाः पुंसि च। इह केषांचिदर्थभेदेन व्यवस्था। तथा च शाश्वतः। मकरन्दस्य मद्यस्य माक्षिकेऽस्यापि वाचकः। अर्द्धर्चादिगणे पाठात्तु नपुंसक
योर्मधुरिति। अमरस्तु माध्वीकं मधुनद्वयोरित्याह। पात्राद्यन्तस्य नेति। स्त्रीत्वमिति शेषः। सुदिनाहमिति। सुदिनशब्दः प्रशस्तपर्यायः। तथा च प्रयोगः।
सुदिनासु समासु कार्यमेतत् प्रविविच्य्वीत विशेषतस्त्वयं वेति। पथः। कथं तर्हि व्यध्वो दुरध्वो विपथः कदध्वा कापथः समा इत्यमरः। व्यध्वो विपथकापथ्याविति
तिरभसकोशश्च। अत्राहुः। प्रमाद एवायमिति। वस्तुतस्तु पथे गतावित्यस्मात्पचाद्यचि पथते व्याप्नोतीति पथः। आकारान्तोऽयम्। तथा च त्रिकाण्डशेषः। वाटः
पथश्च मार्गः स्यादिति तेन समासे पुंस्त्वम्। न चैवं विपथ इति द्वावपि कापथो न स्यात् कोर्देशस्य दुर्लभत्वादिति वाच्यम्। ईषदर्थे चेति तत्सम्भवात् कुत्सायाम
र्थतः पर्यवसानात्। इदं त्ववधेयम्। परवल्लिङ्गतापवादरूपत्वात्तत्पुरुष एवेदं प्रवर्तते नान्यत्र। विपथा नगरी। बहुव्रीहिरयम्। पन्थानमतिक्रान्ता अति
पथा इत्यपि न। द्विगुप्राप्तेत्यादिना परवल्लिङ्गतायाः प्रतिषेधादिति भावः ॥

ता। पौनरुक्त्यपरिहारायाह। सुदिनशब्द इति। सुदिनस्विति। प्रशस्तास्वित्यर्थः। पथेते इति। एतदात्मनेपदिष्वपि पठ्यत इति मतेनेदम् ॥

माधवेनोक्तप्रायमिति। अत्रारुचिबीजंतूक्तम्। किंच पथइत्यस्य परवल्लिङ्गतापवादत्वात् तत्पुरुषे प्रवृत्तिस्तत्रैव प्रवृत्तौ चापवादत्वमित्यन्योन्याश्रयोऽप्यत्र बोध्यः। तस्माद्द्विपथादिपथे स्यादावर्द्धनावमितिवल्लोकाश्रयत्वाल्लिङ्गस्य लिङ्गमशिष्यमितिन्यायेन सिद्धमिति बोध्यम्। एवं चाध्वो विपथकापथाविल्सपि समञ्जसम्। द्वितीये

एवं चन्यायसाम्येन व्यन्हे त्र्यहापि राज्ञान्हाहाइत्यस्य प्रवृत्तिर्नेति माधवेनोक्तप्रायम्। मृदु पचतीति। क्रियाविशेषणत्वाद्द्वितीयान्तम्। धातूपात्तभावनां प्रति हि फलांशः कर्मीभूतः तथा च फलसामानाधिकरण्ये द्वितीया। अतएव सकलत्वाविलादेकारकपूर्वकत्वान्नेति। यत्रतु भावनांप्रति करणतया धात्वर्थविशेषोऽन्वेति तत्र तद्विशेषणानां तृतीयान्तत्वैव। ज्योतिष्टोमेन स्वर्गकामो यजेतेति यथा। एतच्चकरणेऽजइति सूत्रेऽनुतेपदमञ्जर्योः स्पष्टम्। न चैवं ज्योतिष्टोमेन भक्तिपूर्वं यजेतेति न सिद्ध्येदिति वाच्यम्। भावनाविशेषणत्वेतदुपपत्तेः। तत्रापि संदर्शनप्रार्थनादि भिर्व्याप्यमानत्वात् क्रियायाः कृत्रिमकर्मत्वविवक्षायां तद्विशेषणत्वाद्द्वितीया। अन्यथातु प्रथमैवेति विवेकः। सामान्येन नपुंसकमिति च अनियतलिङ्गविषयकम्। तेन आदिः पचति प्रातरादिरिति पुंस्त्वमेव। विस्तरस्तु शब्दकौस्तुभे बोध्यः। पर्यायस्यैवेति। कथं तर्हि नृपतिसभामगमन्नवेपमाना इति कीचकवधे। गजपतिवत् राजविशेषणत्वादिति रक्षितः। विभाषा सेना। च निशमिति। कृत्स्नचतुर्दशीरात्रः। तस्यां किल के विद्धान उपवसन्ति। तथा च तिर्यगधिकरणे शाबरभाष्यम्। पुनश्च चतुर्दश्यामुपवसतः पश्याम इति। इति तत्पुरुषः ॥

ति। क्रियाविशेषणादिति भावः। ज्योतिष्टोमेनेति। तदभिन्नेन यागेनेष्टं भावयेदिति तत्र बोधात्। न सिद्ध्येदिति। कर्मभूतफलांशाभावेन द्वितीयानापत्तेस्तृतीयापत्तेश्चेत्यर्थः। कथं तदुपपत्तिस्तत्राह। तत्रापीति। व्याप्यमानत्वादिति। तेषां धात्वर्थविवक्षयेत्यर्थः। ज्योतिष्टोमाभिन्नयागकरणिकामिष्टविषयां भावनां पश्येदिति बोध इत्यभिमानः। तथा बोधाननुभवेनाह। अन्यथेति। पुंस्त्वमेवेति। आदिशब्दस्य नित्यपुंस्त्वात्। अतएव प्रातरादिरित्यत्र प्रातरित्यस्य क्लीबत्वेऽपि लिङ्गत्वे पिवा आदिरित्यस्य पुंस्त्वमेव॥ इति तत्पुरुषः ॥

समासेनाभिहितत्वादिति। एवंचतेषांकर्मत्वादिरूपतैवनास्तिविभक्तिवाच्यतावच्छेदकरूपेणकर्मादीनांकर्मादिशब्दैरुक्तेरप्यनभिधानादितिभावः। तत्तिद्धेरिति। लनव कारत्वेनाव्ययीभावादिसंज्ञायाअस्यावाधादितिभावः। उत्तरपदलोपइत्यस्यशेषंप्रदर्शयति। वक्ष्यइति। सूत्रजमिति। मुख्यार्थेतुनसमासोनभिधानादितिभावः। नच

रुद्रसंप्रदानकोपहरणकर्मपशुः। पशुकर्मकोपहरणसंप्रदानंरुद्रः स्थाल्यधिकोद्धरणकर्मओदनः। ओदनकर्मकोद्धरणावधिः स्थालीत्यादिरर्थः। दृहकर्मादीनांसमासेनाभिहितत्वात्प्रथमा। प्रथमार्थेत्विति। दृष्टेदेवेअनयोर्नसमासः। शेषत्वादित्यत्रतात्पर्यम्। व्यधिकरणानामिति। अत्राप्युक्तएवहेतुः। इत्यंशेषग्रहणमुपनिबद्धम्। नचोन्मत्तगङ्गमित्यादिव्यावृत्तिरेवतत्फलम्। एकसंज्ञाधिकारेणैवतस्मिंस्तत्सिद्धेरितिभावः। अनेकमन्यपदार्थेइत्यस्यानेकंवहूनामपियथास्यात्। तदुदाहरणंतुमूलएवस्फुटीभविष्यति। एवंचात्रसुबित्येवानुवर्तते। नतुसुपेति। यत्तुसुप्सुपेत्यनुवर्त्यानेकंसुबन्तंसुबन्तेनसहेतिव्याख्यातम्। तन्न। द्विपदबहुव्रीह्यसिद्धिप्रसङ्गात्। प्रादिभ्यइति। प्रादिभ्यः परंयद्धातुजंतदन्तस्यपदान्तरेणसहसमासोव्याख्येयः। सूत्रसिद्धार्थानुवादोयम्। वाचेति। इदंतुवार्तिकम्। पूर्वपदान्तर्गतस्योत्तरपदस्यधातुजस्येतिवलोपोवाच्यः। एतच्चप्रादीनामेववृत्तौविशिष्टार्थवृत्तितामाश्रित्यसूत्यजम्। स्त्रियाः पुंवत्। ऊङोऽभावइत्स्त्रियइतितुऊङोऽन्योऽनूङितिपर्युदासः स्यात्तर्हिटाबाद्यन्तमेवगृह्येततत: किमितिचेत्। इडविडौः पत्यंजनपदशब्दात्क्षत्रियादञ्। स्त्रीविडः। दरदोपत्यंस्त्रीतश्चेतिलुक्। इडविड्दरत्। साचासौवृन्दारिकाचऐडविडवृन्दारिका। दारदवृन्दारिकेतिनसिद्धेत्। नह्यतस्त्रीप्रत्ययः कश्चिदस्तीतिभावः। निपातनादिति। एतच्चपूर्वत्रापियोज्यंवैयधिकरण्येनस्वरसतोबहुव्रीहेर्दुर्लभत्वात्॥

इयमवधेयम् दारदः। तपोः स्त्रिया

ऊ नारम्भएवतुज्यायात्। नसिद्ध्येदिति। जातेश्चेतिनिषेधस्तुनात्रनिषेधविषयेएवपुंवत्कर्मधारयेत्यस्यप्रवृत्तेः। किंचतत्रजातेरितिपञ्चमीनिर्देशात्ततः परोयप्रत्ययस्तदन्तेस्तनिषेधोनायंतथा। एवंचसत्यभिधानेबहुव्रीहावपिऐडविडभार्यइत्येव। भाष्येउत्तरसूत्रोदाहरणंतुतत्राप्ययमेवार्थइतिसूचयितुमैडविडस्थानन्तरापत्यत्वेभाष्यमते

त्राप्यानुपलम्भनात। तदनुरोधबीजतु प्रागुक्तार्थकभाषितपुंस्कादित्यस्याप्रसिद्धत्वम्। षष्ठ्यन्तपाठइति। अनूङः समानाधिकरणेइत्येवंरूपः। पुमान्यस्मिन्निति। प्रवृत्तिनिमि
त्तस्याधारत्वविवक्षयासप्तमी। सत्सप्तमीवायस्मिन्अर्थेसतिपुमान्भाषितोभवतीत्यर्थः। स्त्रीप्रत्ययेति। स्वरितत्वप्रतिज्ञयाप्राप्तमित्यर्थः। अचः परस्मिन्नितीति। उत्तरपदपरत्वा
अलुगिति। इहभाषितपुंस्कमवतीतिभाषितपुंस्कात्। अतनेः क्विप्। एवंचसमानाधिकरणएवबहुव्रीहिः। अलुगर्थंचयत्नोमास्त्विति यद्यपिसुवचंतथापिप्राचाम
नुरोधेनक्लिष्टव्याख्यानमितित्यवधेयम्। षष्ठ्याश्चेति। एवंचसूत्रेकेषांचित्षष्ठ्यन्तपाठोऽनाकरः हरदत्तादिग्रन्थविरोधातिदितिभावः। तुल्येइत्यादि। अयंभावः। भा
षितः पुमान्यस्मिन्नर्थेतद्भाषितपुंस्कंप्रवृत्तिनिमित्तम्। तदस्यास्तीतिअर्शआद्यच्। तेनतुल्येप्रवृत्तिनिमित्तेउक्तपुंस्कंशब्दरूपंलभ्यतइति। स्त्रीवाचकेति। एते
नस्त्रियाइत्यस्यस्त्रीप्रत्ययपरतांवारयति। तथाहिसतिइत्यंसूत्रार्थः स्यात्। अनूङः स्त्रीप्रत्ययस्यपुंसीवनिवृत्तिरित्यर्थः। यथामरुवदस्मिन्ग्रामेजलमित्युक्तेअ
भावएवातिदिश्यतेतद्वत्। नन्वयमेवन्यायवाक्यार्थोऽस्तु। यथोक्तंप्राचाउक्तपुंस्कात्परस्यानूङः स्त्रीप्रत्ययस्यपुंसीवपुंवत्स्यात्। पुंवद्भावात्स्त्रीप्रत्ययलोपइतिचेन्न
वम्। अस्यार्थस्याकरेएवअनेकधादूषितत्वात्। तथाहि। अस्मिन्पक्षेपटुभार्यइत्यत्रोत्तरपद्निमित्तायाङीषोनिवृत्तिः। अचः परस्मिन्नितिस्थानिवत्त्वेसतियण्स्यात्।
किंचवतण्डस्यापत्यंस्त्रीवतण्डी। वतण्डाच्चेतियञ्। तस्यलुक्स्त्रियामितिस्यपत्येलुक्। ङीङः रवादित्वान्ङीष्। वतण्डीचासौवृन्दारिकाचवातण्ड्यवृन्दारिकेति
इष्यते। अत्रङीषोनिवृत्तावपिअर्थस्यतस्यस्त्रीत्वस्यानिवृत्तत्वाल्लुक्स्त्रियामितिप्रवर्तेत। अपिचैवमेडविडस्यापत्यंस्त्रीत्यादिप्रागुक्तंनसिद्ध्येत्। किंचगार्ग्यश्चतावृन्दा
रिकाश्चगार्गवृन्दारिकाः। ङीपिनिवृत्तेऽपियञञोरितिलुङ्नस्यात्। अस्त्रियामितिनिषेधात्। तस्माद्यथाव्याख्यातमेवग्राह्यम्। लौकिकेति। यत्तुचित्राणांगवामयमिति
मीमांसकैर्विग्रहीतंतल्लौकिकाल्लौकिकबहिर्भूतत्वादुपेक्ष्यमितिभावः। एतच्चमासजातइत्यत्रप्रपञ्चितम् ॥
निमित्तत्वादस्यानिवृत्तेरितिभावः। प्रवर्तेतैवेति। ननिवर्ततेत्यर्थः। अस्त्रियामितीति। तद्राजस्यबहुष्वितिसूत्रात्तत्रतदनुवृत्तेरितिभावः ॥

पूर्वसवर्णदीर्घेनेति। पूर्वशब्दे सानुस्वारः पाठः समासात्पूर्वं नसवर्णदीर्घ इत्यर्थः। पूर्वसवर्णेत्यपपाठो दीर्घाज्जसीतिनिषेधात्। इत्यमेवेति। पूर्वपदं नाक्षिप्यं तद् इत्येव मेवेत्यर्थः। चतुर्णां द्वन्द्वे इति। उपक्रमभाष्यन्तु स्तथैवलाभादितिभावः। एतेन नेष्टन्तद्वन्द्वं कृत्वो ह्यात् शब्दे गृद्वन्द्वे नदोषइत्यपास्तम्। पूर्वपदमिति। येनानङ् स्यादितिशेषः।

चित्राअस इति। अन्तरङ्गानपीतिन्यायादिह पूर्वसवर्णदीर्घो न प्रवर्तते अन्यथा एकादेशस्य पूर्वान्तत्वेन सुपो लुकि चित्रगुरित्यत्र अकारो न लभ्येतेतिभावः। नेदेति। इष्टसिद्ध्यनुरोधेन पूर्वपदं क्वचिदाक्षिप्यते न तु सर्वत्र। तथा चौजः सहोम्भसु इतिसूत्रे हरदत्तेन स्पष्टमेवोक्तमितिभावः। आनङिति। तथा च समर्थसूत्रेभाष्ये होतृपोतृनेष्टोद्गातार इत्यत्र चतुर्णां द्वन्द्वे तृतीयस्य आनङ् दाहृतः। पूर्वपदाक्षेपे तु स न सिद्ध्येत् न ह्यत्र नेष्टा पूर्वपदं नापि तदन्तं होतुरेव पूर्वपदत्वादितिभावः। अतएवेति। पूर्वपदाक्षेपाद्येवेत्यर्थः। चित्राजरदिति। न चेह द्वन्द्वात्मकस्य पूर्वपदस्य पुंवद्भावोऽस्तु तथा च टाबपि निवर्ततेनेति वाच्यम्। द्वन्द्वान्तर्गतयोः स्त्रीप्रत्ययप्रकृत्योः प्रत्येकं भाषितपुंस्कत्वेऽपि उदाहृतद्वन्द्वस्यातथात्वात्। तथा च पट्वीमृद्व्यौ भार्ये यस्येति विगृह्य पट्वीमृदुभार्य इत्युदाहरता भाष्यकारेण सर्वमिदं ध्वनितमितिभावः। द्वयोरपीति। पूर्वपदान्तर्गतमुत्तरपदस्याश्रित्य प्रथमस्यापि पुंवद्भाव इतिभावः। जरच्चित्रेति। पूर्वकालैकेतिसूत्रे जरच्छब्दस्य प्रथमानिर्दिष्टत्वादुपसर्जनत्वे सतिलिङ्गविशिष्टपरिभाषयाजरत्याः पूर्वनिपातः। कर्मधारयोत्तरेति। एतेनादृष्टसदृशप्रजमितिप्रयोगो व्याख्यातः। इहप्रपट्के बहूनां बहुव्रीहौ पूर्वपदं न पुंवदित्युक्तारूपे विशेषउक्तः। अनिज्विधावपि विशेषान्तरं वक्ष्यति। यनुप्रावानीलोज्ज्वलवपुरित्युदाहृतं तत्र स्वरे विशेषो बोद्ध्यः। तथाहि ॥

लिङ्गविशिष्टपरिभाषयेति। जरच्छब्दस्य प्रथमानिर्दिष्टत्वात्तेन लिङ्गविशिष्टपरिभाषयाजरतीशब्दस्यापि ग्रहणेनोपसर्जनत्वे सति जरत्याः पूर्वनिपात इतिशेषपूरणेनान्वयः। विशेषान्तरमिति। परमः स्वोधर्मो यस्येति त्रिपदबहुव्रीहावपितिजभावरूपमित्यर्थः ॥

महान्भेद इति। यदि तु कर्मधारयोत्तरपदे बहुव्रीहौ नीलपदस्वरः सिद्ध्यतीत्युच्यते तदा चिन्त्यमेव प्राचीनोदाहृतमिति भावः। तत्करोतीति। प्रमाणं प्रमां करोति जनयतीत्यर्थः। क्विबन्तस्येदमिति। सवर्णदीर्घे प्य जादेराकृतिगणत्वाट्टाप् बोध्यः। अगतिकगतिरिति। भाष्यानुक्तत्वादिति भावः। प्रत्ययाश्रय इति। तेन लोपस्य बहिरङ्गत्वेना
बहुव्रीहि पूर्वपदे नीलशब्दस्य प्रकृतिस्वरः कर्मधारयपूर्वपदे तु कर्मधारयस्यान्तउदात्त इति महान्भेदः। स्त्री प्रमाणी यस्येति करणार्थल्युडन्तत्वात्प्रमाणश
ब्दो विशेष्यलिङ्गः। टित्वान्ङीप्। कथं तर्हि प्रमाणा यां स्मृताविति शाबरभाष्यम्। भावेल्युडन्तात्तत्करोतीति णिचि पचाद्यचि टाप्। यद्वा प्रमाणमिवाचरतीति आ
चारक्विबन्तात्पचाद्यच्। भट्टास्तु। प्रमाणमप्यनेयीति मूलभूतां श्रुतिं यतः॥ क्विबन्ताद्यथतेस्तस्मात्प्रमाणा स्मृतिरुच्यते॥ १॥ इत्यादिग्रन्थेन अयतेः क्विबन्तस्येदं
रूपमित्याहुः। तत्र ह्रस्वस्य पितीति तुक् दुर्वारः। आगमशास्त्रमनित्यमिति तु अगतिकगतिः। इह तु गत्यन्तरमुक्तमेव। यदप्याहुः। लोपो व्योर्वलीति लोपो पीह व
लादिप्रत्ययाश्रय इति। तदप्यापाततः। तत्र प्रत्ययग्रहण स्याप्रकृतत्वात्। गौधेरः पचेते इत्याद्युदाहरणविरोधाच्चेत्यास्तां तावत्। परिगणितानां त्रलतसिलादीन्
त्रयोदश... इति। बहीष्विति। यद्यपि बह्वादिषु ङीषो वैकल्पिकत्वात्तदभावे बहुत्रेत्यादि सिद्ध्यति तथापि पाक्षिकानिष्टवारणायेदम्। यत्तु प्राचा तत
स्तस्मिन्नित्युदाहृतं तत्तत्सर्वनाम्नो... त्रेइत्यनेन गतार्थत्वादुपेक्ष्यम्। दर्शनीयतरेति। कं प्राचा पटुतमे स्त्रीष्विह तन्नामादिकमिति ध्वनयन्नाह। घरूपेति। बहु
थेति। प्रकारवचने थाल्। तत्र हि किं सर्वनाम बहुभ्य इत्यधिकृतम्। वृकतिरिति च। वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसीति तिल्। अजथ्येति। अजाविभ्यां थ्यन्। प्रा
सीति बहुल्यार्थादित्ययमपि शसन्तासिलादिषु द्रष्टव्य इत्यर्थः। त्वतलोरिति। अत्र वदन्ति। जातिसञ्ज्ञाव्यतिरिक्तं धर्ममात्रं गुण इति। एवं च क्रियाशब्दानामप्यनेन
पुंवद्भाव इति भावः ॥ ७७ सित्त्वान्न तुक् प्राप्तिरिति भावः। गौधेर इत्यादि। रशब्दे तेशब्दे यो प्रत्ययावयवत्वेपि प्रत्ययत्वाभावादिति भावः। विरोधाच्चेति। ऋ न तु कोपि
प्रत्ययापेक्षत्वेन समत्वमित्यस्य संग्रहः। ततस्त्रेति। तस्यां तस्यामित्यर्थे इदम्। तिलिति। लिङ्गविशिष्टपरिभाषयेति भावः। परिगणनसामर्थ्यादेव जातेश्चेति निषेधाप्रवृत्तिरिति बो

कैयटइति।अनेनहिकैयटेनभेदकंधर्ममात्रंगुणइत्यस्यनिरासेनशुक्लादिगुणग्रहणंसूचितम्।अत्रारुचिबीजंतुसंज्ञाजातिकृदन्ततद्धितान्तसमस्त[illegible]नामसंख्याश
ब्दातिरिक्तः शब्दोगुणवचनः शब्दइत्येकदारसूत्रस्यभाष्यविरोधः।अयंचसंख्यासर्वनामेतिचस्पष्टमेव।प्रगृह्यसञ्ज्ञेति।इग्यणइतिसूत्रेउभयत्र[illegible]ातेभाष्यप्र

अतएवप्राचीनकोपधायाइतिसूत्रेपाचिकातापाचिकात्वमित्युदाहृतम्।तस्योत्रेणचत्वतलोरितिग्राम्विरितिव्याख्यातम्।तदेतत्सर्वंभ[illegible]विरोधादुपे
क्ष्यम्।तथाहि।एकतद्धितेचेतिसूत्रे एकतायाएकत्वमित्युदाहृत्यपुंवद्भावेनसिद्धमित्याशङ्क्यभगवानाहउक्तमेवतत्त्वतलोर्गुणवचनस्येति।अत्रकैयटः।एक
शब्दस्यसंख्यावाचित्वाद्यांगुणवचनत्वेपिअसहायवाचिनःतथात्वादितिभावइति।एवंहिवदताशुक्लादयएवेहगुणाइतिध्वनितम्।अतस्तथैवोदाहरति।
शुक्लत्वंशुक्लता।अतएवप्रसुर्वेस्त्वसि।कर्त्रीइति।कर्त्रीत्वमिति।तथाचस्त्रियामितिसूत्रेव्यापिनीत्वात्स्त्रइत्तेरितिकैयटेनप्रयुक्तम्।तथाचपुंयोगादितिसू
त्रेस्त्रियाःसंविधात्रीत्वादितितेनैवप्रयुक्तम्।प्रगृह्यसञ्ज्ञाप्रकरणेपिविभक्तेरेवसञ्ज्ञिनीत्वादित्युक्तम्।स्यादेतत्।निरीक्ष्यमेनेशरदम्कृतार्थताम्।सैवतामुप
गतास्त्वनुवेलंग्रहतारहसिभर्तृस्वामिः।सा[illegible]मोचरतिदुःखशीलतामित्यादिप्रयोगाणांकागतिरित्यतआह।शरदइति।सामान्यइति।[illegible]ाचपत्युर्नो
यज्ञसंयोगेइतिसूत्रेपत्न्याःफलग्रहीतृत्वादितिवृत्तिग्रन्थमुपादायकर्तृत्वमात्रंविवक्षितंनतुस्त्रीत्वमितिउपनक्तइतिहरदत्तोव्याख्यत्।पर.
संनिकर्षइतिसूत्रेएकैकवर्णवर्तित्वात्वाचइतिभाष्येकैयटोप्येवमेवाह।एतेननेष्टंपुरोहुरवतीत्वमासीत्इतिमाघोव्याख्यातः ॥

योगोपिमानम्।तस्यसमस्तत्वेनाप्यगुणवचनत्वंबोध्यम्।कृतार्थतेति।कृतार्थदुःखशीलशब्दौक्रियाशब्दावितिभावः।समसौचेत्यपिबोध्यम्।व्याख्यातइति।द्वारवती
तिसञ्ज्ञापिनेष्टाकिमुतदीर्घार्थइतिव्याख्यातृभिर्व्याख्यातत्वेनसञ्ज्ञाशब्दत्वात्।भाष्यरीत्यातद्धितान्तत्वेनगुणवचनत्वाच्च।त्वेनेतिकृत्स्नस्यकृदन्तस्यैवेतिबोध्यम् ॥

रौहितेय इति। पुंवद्भावे सिद्धस्य प्रत्ययविधावित्यनाश्रित्येदम्। तदाश्रये तु रौहितिरित्यापत्तिर्बोध्या। संस्कारविशेषे इति। तद्धेतौ [illegible] विशिष्टप
रिभाषयेत्यर्थः। इत्यविरोध इति। एवं च माधवानुसारेणायं लिखित इति सूचितम्। रूढ्यर्थं चेति। तत्र तदर्थमिदं निपातनं न विवाहनिबन्धन[illegible] इति तस्य त
स्य स्वविवाहितपुरुषविवाहितस्त्रीमात्रबोधकत्वेनान्याबोधकत्वेन चातिप्रसङ्गाभावेन रूढिकल्पने फलाभावाच्च। तस्याः भाषितपुंस्कत्वेन पुंवत्त्वाप्राप्त्या पुंवत्त्वबाधना
र्थमिति न्यासग्रन्थासंगतेश्च। किंतु तृतीयस्य। स हि योगार्थप्रवृत्तिनिमित्तक एवङ्युन्तो लोकव्यवहारेण समुदायोच्चारणेन च स्त्रीविशेषे मध्यमसपत्नीशब्दो ज्ञेयो रू
रौहिणेय इति। रोहितशब्दाद्वर्णादनुदात्तादिति ङीन्नकारौ। पुंवद्भावे तु सति तयोर्निवृत्तौ रौहितेय इति स्यादिति भावः। गृह्यत इति। आस्थानमेवात्र शरणम्। शा
त्रु पर्याया इति। अत्र च व्यन् सपत्ने इति निर्देशो लिङ्गम्। रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः इत्यमरः। वि[illegible]बन्धनमिति। तज्जन्यसंस्कारविशेषे रूढ
मित्यर्थः। सापत्न्य इति। भाषितपुंस्कत्वात्पुंवद्भावे कृते यस्येति लोपः। एतच्च सुज्ञातौ वृत्तौ स्पष्टम्। यत्तु पारसण इति धातौ माधवेनोक्तम्। भावकर्मणोरुपसन्तल
सणे यत्किं सापत्न्य[illegible] अभाषितपुंस्कत्वात्पुंवद्भावो नेति। तत्तु द्वितीयं सपत्नीशब्दमाश्रित्येत्यविरोधः। यत्तु नित्यं सपत्न्यादिष्वित्यत्र न्यासकृतोक्तम्। समुदायोच्चा
रणं पुंवत्त्वबाधकं [illegible]मिति [illegible]। समानस्य सभावार्थं रूढ्यर्थं च निपातनाश्रयणेन समुदायोच्चारणस्य तावतैवोपपद्यात्। अन्यथा संबुद्धिह्रस्वादीनामपि बाधापत्तेः।
किंच तसिलादिष्विति सूत्रे भाष्ये [illegible] सपत्नीशब्दात्फिञायणि भस्याढे इति पुंवद्भावेन सापत इति प्रापय्य शिवादिषु ॥ ७ ॥ इति भावः। अत एव समानस्वामिकदासे
न तथा व्यवहारः क्वचित्तथा व्यवहारस्तु गौणः। किंच विवाहनिबन्धनः पतिशब्दो नास्त्येव। स्वामित्वेनैव हि स बोधकः। स्वामित्वं च प्रकरणादिना यज्ञफलनिरूपितं कदाचि
त् बुध्यते। तत्खण्डनपरं पुंवद्भावबाधकत्वे दूषणान्तरमाह। किंचेति। सापत इति। प्रापय्येति। अढे इत्युच्यते तत्र सापत्ने पुंवत्त्वं प्राप्नोति। एवं च सापत इति प्राप्नोतीति भाष्यकैय
टयोरुक्तम्। तृतीयस्य हि भाषितपुंस्कत्वेन पुंवत्त्वापत्तिः। स हि समानस्वामिकत्वेन पुमांसमप्याह। पुंवत्त्वबाधे हि तदसंगतिः स्पष्टैव। किंच विवाहनिबन्धनस्य त्वे तस्याः

भाषितपुंस्कत्वेनतमादायसापत्नसिद्धेस्तदसंगतिः।नचसापत्नएवनसिद्ध्यतिसापतोपिप्राप्नोतीतिभाष्यार्थइतिवाच्यम्।द्वितीयसत्त्वेरूढत्वेनतस्यैवशिवाद्यणग्रहणे
तृतीयादणोऽभावेनमाधवरीत्यासापत्प्राप्तेरितिदिक्।केवलयौगिकस्यग्रहणंनेति।केवलयोगमात्रलभ्यसमानपतिकत्वरूपप्रवृत्तिनिमित्तकत्वेनेत्यर्थः।तेनैवस्वविवाहितपतिविवाहितांस्त्रियमाहननुतस्यनाव्यक्तिविशेषस्यबोधनाच्चरूढ्यर्थंनिपातनमुक्तम्।अतएवास्यभाषितपुंस्कत्वमितिभावः।यद्वा।केवलयौगिकपतिशब्दघटितस्येत्यर्थः।एवंहि[illegible]सिद्धान्त[illegible]।सापत्नः प्रकृत्यन्तरत्त्वात्।सपत्नशब्दः प्रकृत्यन्तरमस्तीति।अस्यार्थः।अन्याप्रकृतिर्यस्यसप्रकृत्यन्तरस्तत्त्वादित्यर्थः।प्रकृत्यन्तरमाहुः सपत्नस्तद्वति [illegible]पितप्रकृत्यन्तरत्वसपत्नश
ब्दस्यशब्दमर्यादया[illegible]।ने[illegible]नि[illegible]पितम्।लक्षणयातथाव्याख्यानेचनमानम्।एवंचसपत्नीतिगणपाठमाश्रित्यसपत्नप्रकृतिकसपत्नीशब्देनसापत्नसिद्धावपिसा
केवलयौगिकस्यग्रहणंनेआशयेनसापतइतिप्रयोगोवारितः।निपातनस्यपुंवद्भावनिवृत्त्यर्थत्वेतुसर्वंविरुद्ध्येनेतिदिक्।भावत्कादिति।ठावस्यायामेवाभत्वेपिपुंवद्भावोविधीयते ॥ पतोपिप्राप्नोतीतिभाष्येपूर्वपक्षः त्वत्संपताप्रकृतिर्गणेनपठ्यतेकिंतुभिन्नसपत्नशब्दःतद्यथा लिङ्गविशिष्टपरिभाषयाङीनन्तादण्सिद्ध्यति।नाद्यसामान्यचित्तमाशिवादिपाठोदृष्टकोपिबाधकइत्युत्तराशयः।एवंचकेवलयौगिकपतिशब्दघटितस्यग्रहणंनेतिस्पष्टमेव।एवंचमूलेद्वितीयसपत्नीशब्दमुत्सृज्यनमाधवानुरोधेन।तदेतद्ध्वनयतायत्तुपारस्यणवृत्त्यादिनामाधवग्रन्थमुपन्यस्यतत्रद्वितीयसपत्नीशब्दमाश्रित्येत्युक्त्वादायविरोधाभावउपपादितः।सापत्न्यमितिप्रयोगस्तुसपत्नप्रकृतिकादेवब्राह्मणादित्वात्ष्यञिबोध्यः सपत्नप्रकृतिकोपितृतीयसपत्नीशब्दार्थएवतत्रैवलोकेतत्प्रयोगात्।रूढयोरेवग्रहणादित्यस्यसपत्नशब्दस्यलिङ्गविशिष्टपरिभाषयातत्प्रकृतिकङीनन्तस्यचेत्यर्थः।तयोः शुद्धरूढत्वात्।तृतीयस्तुयोगरूढः।अन्यथाऽस्यापिस्वयंरूढत्वेतद्ग्रहणेबीजाभावः।मद्यमा[illegible]रितिव्याख्यातॄणांमद्यमस्यैवतस्यरूढिघटितस्यशुद्धयौगिकस्यग्रहणेऽस्यरूढस्यकथंत्यागः स्यात् इतिसुहृदोविभावयन्तु ॥

अभ्युपगमइति। नकर्तीचेत्यपिबोद्ध्यम्। अव्ययमिति। तिङन्तानुकरणमित्यन्ये। हरदत्तइति। कैयटस्त्वा पठ्यत एवेति। तेनतद्योपीतिभावः। कइति। अचिविभाषेतिलत्वम्। इ
भस्तु कारोभ्युपगमः। अस्त्विति तिङन्तप्रतिरूपकम् अव्ययम्। धेनुंभव्येति। भव्यगेयेति कर्तरि कृत्यः। धेनुश्चासौ भव्याचेति विग्रहः। भविष्यन्ती धेनुरित्यर्थः। गौतमस्मृतौ
तु स्नातकधर्मेषु अधेनुं धेनुभव्येति ब्रूयादिति प्रयुक्तं तन्त्रार्षत्वान्मुमागमो नेति। तद्व्याख्यायां मिताक्षरायां हरदत्तः। लोके पृणइति। पृणतिः पूरणकर्मेति हरदत्तः। प्रीणनइ
तितु पठ्यते एव। अनभ्याशमित्यइति। अभ्याशं समीपं तद्विरुद्धम् अनभ्याशं दूरम्। एतिस्तु शास्त्रिस्यादिना इणः क्यप्। भ्राष्ट्रमिन्धइति। कर्मण्यण्। घञन्तेन वा षष्ठीसमासः।
तिमिङ्गिलइति मत्स्यविशेषः गिरतेर्मूलविभुजादित्वात्कः। गिलगिलेचेति। गिलङ्गिलतीति विगिलगिलः तिमीनां गिलगिल इति विग्रहे इदमारब्धम्। नित्यमेवेति। पूर्ववि
प्रतिषेधेनेतिभावः। सज्योतिरिति समानं ज्योतिरस्येति बहुव्रीहिः। यस्मिन् ज्योतिषि आदित्येन सत्त्रे वा उपनिपतितं तदस्तमयपर्यन्तमनुवर्तमानमाशौचं सज्योतिरित्यु
च्यते। पृषोदरादीनि यथोपदिष्टम्। निरुक्तादिशास्त्रसिद्धानामसमासपदानामुणादयो बहुलमिति सिद्धिः। अनेन तु समासपदानामिति विवेक इति हरदत्तः। वस्तुतस्तु
समासविषयकमेवेदमिति न नियमः। हंससिंहशब्दयोरपि प्राचा कारिकायामुदाहृतत्वात्। हन्तेः पचाद्यचि समागमः। हिंसेः पचाद्यचि हकारसकारयोः स्थानव्यत्ययः। यदितु
भवेद्वर्णागम इति श्लोकस्यापि प्रकृतसूत्रोदाहरणतायां नाग्रहः किंतु नैरुक्तव्युत्पत्तिरनेकधेत्येतावन्मात्रं तदा हरदत्तोक्तविवेकोपि निर्बाध एवेति दिक्। आकृतिगणोयमि
ति। तेनान्यदपि सिद्ध्यति। लुम्पेदवश्यमः कृत्ये तुङ्काममनसोरपि। समो वा हितततयोर्मांसस्य पचि युड्घञोः। अन्तमिति शेषः। कृत्यप्रत्ययान्ते उत्तरपदे अव
श्यंशब्दस्यान्त्यमकारं पुमांल्लुम्पेत्। तथा कामशब्दे मनस्शब्दे च परे तुम्शब्दस्यान्त्यम्। तुमिति षष्ठ्यर्थे प्रथमा। युट्घञ्प्रत्ययपरो यः पचधातुः तस्मिन्परे मांसस्यान्त्यम
कारं लुम्पेदित्यर्थः। अवश्यसेव्यः। गन्तुकामः। गन्तुमनाः। संहितं। संहितः॥ त्यादिश्लोकस्यापीति। भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययादित्यादिश्लोकस्येत्यर्थः। अनेकधेति। उ
णादावेव प्रत्ययोन्यश्चेत्येकोपगतोक्तस्तदा प्रत्ययातिरिक्तकार्यमप्योणादित्वादित्येवमित्यर्थः। तुंकामेत्यत्र तुमिति समोप्युपलक्षणम्। तेन सकामः समना इति सिद्धम्॥

निपातनादिति। दृषोदरादिषु विशिष्टपाठादित्यर्थः। समासस्त्वेतन्मांसेनादस्यं कर्तव्यमित्यादिसिद्धिः। मांसस्येत्यादंशः पदन्निति सूत्रस्थेन मांसपृतनेत्यादिवार्तिकेनापि सूप
पादेः नभिधानात्तान्तत्वमित्यसाधु। निर्वीहं इति। तेन कार्यविशेषेभवन्त्वन्नदिशेषेपदत्वं चेतिभावः। व्याख्यायामिति। तन्मन्त्रपदकेऽऋतावृधाविति पदेऽउक्तमित्यर्थः। तनेतीति। अ
सततः। सन्ततः। मांस्यचनम्। मांस्पाकः। इह संयोगान्तलोपाभावोऽपि निपातनाद्बोध्यः। छन्दसि तु अपस्मयादित्वेनापि निर्वाह उक्तः। अपरस्पराः क्रियासातत्य इति सूत्रे
सातत्यनिर्देशेनैवैकदेशानुमतिद्वारा पूर्वाचार्यपठितो मस्शब्दो ज्ञापित इत्याहुः। नहिवृति। एषु परेष्विति। उत्तरपदे ष्विति बोध्यम्। उपनह्यत इत्युपानत्। संपदादित्वा
त्कर्मणि क्विप्। निवर्तते इति नीवृत्। प्रवर्षतीति प्रावृट्। मर्माणि विध्यतीति मर्मवित्। रुच दीप्तौ। निरोचन इति नीरुक्। ऋतिं सहते ऋतीषट्। सहेः पृतनर्ताभ्यां चेत्यत्र
सहेरिति योगविभागादनुक्तसमुच्चयाद्वास्य षत्वमिति न्यासकारः। पूर्वपदादिति षत्वमिति हरदत्तः। परितनोतीति परीतत्। गमः क्वाविति अत्र गमादीनामिष्यत इ
ति वचनात्तनोतेरनेलोपः। यत्तु वेदभाष्ये ऋतेन मित्रावरुणावृतावृधाविति मन्त्रस्य व्याख्यायामुक्तं ऋतस्य वर्द्धयितारावित्यर्थेऽन्तर्भावितण्यर्थात् वृधेः क्विप्। नहिवृ
तीत्यादिना पूर्वपदस्य दीर्घ इति तच्चिन्त्यम्। प्रकृतसूत्रे वृधेरनुपात्तत्वात्। तस्मादन्येषामपीति दीर्घस्तत्र बोध्यः। वनं पुरगा। व्यत्ययेन षष्ठ्याः स्थाने प्रथमेत्याह। वनश
ब्दस्येति। विभ्रार्थ इति। असञ्ज्ञात्वेन पूर्वपदात्सञ्ज्ञायामित्यस्याप्राप्तेरिति भावः। अतएवाह। निपातनादिति। यत्तु व्याचक्षते। हलन्तादिनि सप्तम्या अलुगिति तन्नेति भावः। प्रथ
मेनिसप्तम्यर्थस्य प्रातिपदिकार्थेऽन्तर्भावादिति भावः। निषाद इति। निषीदत्यस्मिन्पापमिति निषादः। पुलिन्दो मनुष्यजातिः। हलश्चेत्यधिकरणे घञ्। कथं तर्हि प्रतीहारो दौ
वारिकः। अत्राहुः। प्रतीहारो द्वारम्। तत्स्थानात् लक्षणमिति। एकचितीक इति। शैषिकः कप्। शुनो दन्तेत्यादि। अत्र केचिदंष्ट्रेति ह्रस्वान्तं पठित्वा श्वादंष्ट्र इति बहुव्रीहावेवायं दीर्घ इ
त्याहुः। अन्ये तु दीर्घान्तमेव पठन्तस्तत्पुरुषस्याप्युदाहरणतामाहुः। इह षादिति ॥७॥ सञ्ज्ञात्वाद्धलदन्तादित्यस्याप्राप्तेरित्यर्थः। सप्तम्यर्थस्येति। अर्थे शब्दार्थस्य प्राधान्येपीतिभावः।
कथमिति। दौवारिके प्रतीहारपदप्रयोगः कथं साधुरित्यर्थः। तत्पुरुषस्यापीति। एकदेशविकृतन्यायेन बहुव्रीहेरपीत्यर्थः। शौवादंष्ट्रो मणिरिति श्वादेरिञीति सूत्रे भाष्यप्रयोगादिति बोध्यम् ॥

वक्तव्यमिति। तत्पदघटितं वार्त्तिकमित्यर्थः। चत्वार्यङ्गान्यस्येति। नचोत्तरपदत्वे चेति निषेधात् कथमङ्गशब्दस्य पदत्वम्। अत्यासत्तेः नरपदस्यकार्पित्वम्। एवं नत्ववृत्ते रित्यन्यत्र वि
केचित्तु काश्येति तालव्यमध्ये पठन्ति तत्प्रामादिकमिति भावः। शिरीषवणमिति। ननु यस्य फलमेव न पुष्पं स वनस्पतिः। दानस्पत्यः फलैः पुष्पात्तेरपुष्पाद्वनस्पतिरित्य
मरकोशात्। स च उदुम्बरादिः। शिरीषस्तु न तथा तस्य पुष्पफलोभयसत्त्वात्तत्कथमित्र णत्वमिति चेत्। सत्यम्। इह वनस्पतिशब्देन समानार्थपदलक्ष्यते। अत्र च लिङ्गं लुपियु
क्तवदिति सूत्रे व्यक्तिवचने इति। किं शिरीषाणामदूरभवो ग्रामः शिरीषास्तस्य वनं शिरीषवनम्। वनस्पतित्वमतिदिश्येन तत्र णत्वं स्यादिति भाष्यकारोक्तिः। इरिकादिभ्य इति।
ओषधित्वात्प्राप्तिः। क्षीरपाणा उशीनरा इति। उशीनरशब्दो देशवाची। तद्वासिषु औपचारिकः। गिरिनद्यादीनामिति। वक्तव्यमेतत्। सञ्ज्ञायां प्राप्ते असञ्ज्ञायामप्राप्ते उभयत्र विभाषे
यम्। माषवापिणाविति। बहुलमाभीक्ष्ण्ये इति णिनिः। व्रीहिवापाणीति। कर्मण्यण्। उत्तरपदं यदि ति। अत्र व्याख्यानमेव शरणम्। प्राञ्चस्तु नुमग्रहणमिह ज्ञापकमित्याहुस्तद्दूषय
ति। अत एवेति। ज्ञापकं शिथिलमिति ध्वनयति। किं चेति। परिपक्वानीति। अत्र कुमति चेति नित्यं णत्वं प्राप्तम्। हरिमाणीति। मन्नेण्यन्तात्क्विप्। प्राक् सुबुत्पत्तेः समासात् नकारा
न्तमुत्तरपदम्। नान्तत्वाङ्गीकारस्तु लम्। चतुरङ्गयोगेनेति। चत्वार्यङ्गान्यस्य। तेन योग इति विग्रहः। अतद्धित इति। व्यवधायकस्य पदस्य तद्धितश्चेत्स णो न भवति तदा निषेध इत्यर्थः।
आर्द्रे गोमये णेति। अत्र गोशब्दः पदम्। पारस्कर इति। पारङ्करोतीति विग्रहे कृञो हेतुताच्छील्येति टः। किष्किन्धेति। किं किं दधातीति विग्रहे अतोऽनुपसर्गे कः। पूर्वस्य किमो नलोपः सु
ट् षत्वञ्च निपात्यते। रूढिशब्दाश्चैते कथंचित्सुसाध्याः। तद्बृहतोरिति गणसूत्रम्। तादिति। तलोपश्चेत्यत्रेति भावः। चकारेणैत्युपलक्षणम्। करोभ्यारीति लोपस्य। पिसुत्वचत्वात् दकारत
काराविति। तद्बृहद्भ्यां यथासंख्यं बोध्यम्। प्रायस्येति। प्रायः पाप्यं वै निर्दिष्टं चेत्तस्य विशेषणमिति स्मरन्ति। आकृतिगणोयमिति। तेन परः शतादि इति सिद्धम्। अधिश्रयणीर्जन
नाः परः शताः इति माघः। शतात्पराः इति विग्रहे पञ्चमीति योगविभागात्समासः। राजदन्तादित्वात्परनिपातः। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। लोकाश्रयत्वाल्लिङ्गस्य विशेष्यनिघ्न
ना। पारस्करादित्वात्सुडिति दिक् ॥ ॥ इति समासाश्रयविधयः ॥ ७ परः। पञ्चमीति योगविभागादिति सुप्सुपेत्यन्ये॥ ॥ इति समासाश्रयविधयः ॥ ॥

समर्थानाम्। अलुग्विधानाद्वेति। तेन हि स्वार्थे परिपूर्णस्यैव पदान्तरसंबन्ध इति बोध्यम् इति सुबन्ताद् इत्यर्थः। कुत्सित इति सूत्रभाष्योक्तरीत्या न सिद्धेति भावः। किंच तत्संबन्ध्यपत्यमिति
र्थे प्रत्यय इत्यादिरीत्या तस्यापत्यमित्यादेर्वाक्यार्थ इति संबन्धादिबोधनार्थं विभक्त्युत्पत्तिरावश्यकी निदिक्॥ उचितमिति। भ इदन्त्यस्यैवैकल्पिकत्वेऽपि भाष्यानुरोधेन धर्माधिक्यादुचितमित्यर्थः
समर्थानाम्। ननु प्रकृतसूत्रे एकार्थीभावरूपं सामर्थ्यं ग्रहीतुं नोचितम्। समर्थः पदविधिरिति परिभाषया गतार्थत्वात् घकालतनेषु चेति अलुग्विधानाद्धि सुबन्तात्तद्धितोत्प
त्तिः तथा च पदविधित्वं स्पष्टमेव अत आह। सामर्थ्यमिति। कृतेत्यादि। अस्य फलं तु तस्यापत्यमिति सूत्रे मूल एव स्फुटीभविष्यति। इह समर्थात्प्रथमादिति युक्तं वक्तुम्। महे। तर्गा
नाह। प्राग्दीव्यतोऽण्। अश्वपत्यादिभ्यश्च। प्राग्दीव्यतीये ष्विति। दीव्यतः प्राक् प्राग्दीव्यत्। अपपरिबहिरञ्चवः पञ्चम्या इत्यव्ययीभाव इत्याहुः। प्राग्दीव्यतमिति तु उचितम्। भाष्य इति टि
त्प्रवृत्तेः। ततो भवार्थे वृद्धाच्छः। स्य पुनः अमेहेत्यादि परिगणनात्। अव्ययीभावस्याव्ययत्वे प्रयोजनं लुङ्मुखस्वरोपचारा इति परिगणनाच्च। अश्वादेरिति। निर्धारणे षष्ठी। ते
नार्थसिद्धमाह। अन इति। अचोऽञ्णितीति सूत्रादिव वृद्धस्यानुवृत्तिरपीह सुवचा। प्रामादिकमेवेति। यद्यपि चातुर्वर्ण्यादेराकृतिगणत्वात्स्वार्थ एतत् सूपपादं त
थापि हरदत्तग्रन्थानुरोधादेवमुक्तम्। दित्यदित्यादिपूर्वे पतिशब्दस्योत्तरपदशब्देन बहुव्रीहिं कृत्वा दित्यादिभिर्द्वन्द्वः कार्य इति ज्ञापने ष्ठ इत्यादिभ्यः पत्युत्त
रपदाच्चेति पत्यन्तादिति तु नोक्तम्। बहुच्पूर्वादपि प्रसङ्गात्। दैत्य इति। ननु दितेर्ण्यप्रत्ययो देवनाद्यर्थे सावकाशः अपत्ये तु परत्वादितः प्रानिञ् इति ढक् स्यात्।
सत्यम्। पठ्यते तत्र पूर्वविप्रतिषेधः ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषिद्धमिति। अर्थविशेषे किम्। औष्ट्रपतम्। उष्ट्रपतिर्नाम पत्रम् ॥
। अत एव दीव्यदित्ययुक्तमिति गोक्तम्। नान्ताच्चेऽअव्ययानाम मात्रेद्गति टिलोपवारणार्थं न स्यानित्यत्वात्प्रत्ययेकेशः स्यादित्यप्यस्योचितत्वं बोध्यम्। परिगणनाच्चेति। इयमभ्यु
च्चययुक्तिः। भाष्ये तत्प्रत्याख्यानात्। एवमुक्तमिति। व्यञ्जिनपुंसकत्वापत्तिः। स्वरे भेदश्चेति। हरदत्ताशय इति तदनुरोध इति भावः ॥

परिषदश्वेत्यञिति। नचयत्रात् वाह्येइत्युक्तेरयमप्यर्थविशेषलक्षणइतिवाच्यम्। इदमितिसामान्यशब्देनतद्विशेषसङ्ग्रहात्। विशेषलक्षणग्रहणप्रत्ययस्यैवविशेषशब्दोपादानेनबोधि
नार्थकप्रत्ययत्वमितिभावः। दितिशब्दादिति। क्तिजन्तादितिशेषः। एवमदितेरपि। ङीषिकृतेइति। क्तिजन्ताभ्यामितिशेषः। नपदान्तेति। पूर्वत्रासिद्धेनेतिनिषेधोप्यत्रबोध्यः। निर्वा
तसेदमप्यत्राध्वर्युपरिषदश्वेत्यञ्। अथकथंदैतेयइति। अत्राहुः। दितिशब्दात् कृदिकारादक्तिनइतिङीषिकृतेस्त्रीभ्योढक्। एवस्तुनालिङ्गविशिष्टपरिभाषाया अनित्यत्वा
दिति। आदित्यइति। आदित्यशब्दात् ण्यप्रत्ययेयस्येतिलोपेहलोयमामितियलोपः। नचाल्लोपस्यस्थानिवद्भावः। नपदान्तेतियलोपेतन्निषेधात्। काशिकायामिति। हरदत्तमाध
वादिग्रन्थेष्येवम्। तथाचप्रयोगः। नाथुयामशतशोयाम्याः पुनर्पातनादिति। भाष्येतुनैतदृष्टम्। तत्रच्यञप्रयोगोनिर्वाह्यः। बहिषइति। टिलोपवचनमव्ययानांभमात्रइत्यस्या
नित्यत्वज्ञापनार्थमतेनारातीयइत्यादिसिद्धम्। ण्येप्रकृतेयञ्वचनमायुदात्तार्थम्। प्राचोग्रन्थेतुयण्चेतिपठ्यतेतदनाकरम्। अश्वत्थामइति। भाष्योदाहरणादेवेहतदन्तवि
धिः। अन्यथाबलवाचिनः स्थामन्शब्दस्यकेवलस्यापत्येनयोगाभावेपिजातादिष्वेवविधिःस्यात्। अश्वस्येवस्थामयस्येतिबहुव्रीहौपृषोदरादित्वात्सस्यतः। गोरिति। नकेव
लमपत्यएवकिंतुसर्वेषुप्राग्दीव्यतीयेषु। गव्यमिति। गविभवङ्गोरिदङ्गोर्देवतास्येत्यादिरर्थः। अनेनहिगव्यमितिजैमिनीयसूत्रेविद्यमानंदूषयन्तोवार्त्तिककाराःस
माहिताः केचित्तुप्राग्दीव्यतीयेभ्योऽन्यत्राप्यर्थेऽयंयदितिव्याचक्षाणाः गवाचरतिगव्य इत्याद्यप्याहुः। गोरूप्यमित्यादिहेतुमनुष्येभ्योन्यतरस्यांरूप्यः मयट्चेति
रूप्यमयटौ॥ उत्सादिभ्योञ्॥ अणस्तदपवादानामिञादीनांचापवादोयम्। इहपठ्यतेत्वष्कयासे। असेअसमासे। पूर्वाचार्यसञ्ज्ञेयम्। वष्कयस्यापत्यंवाष्कयः। असे
किम्। गौवष्कयिः। असइत्येतदेवेहतदन्तविधिञ्ज्ञापयति। तेनअधेनूनांसमूहः आधेनवइतिसिद्ध्यति। धेनुशब्दस्येहपाठात् ॥
त्यइति। ष्यञः पित्त्वेष्यञादिपाठादितिभावः। स्त्रीत्वंतुलिङ्गमशिष्यंलोकाश्रयत्वादितिन्यायेनबोध्यम्। वस्तुतस्तुएषोपिप्रागुपपादितहरदत्तादिरीत्याप्रमादएवेतितत्त्वम्।
याम्याः शंसन्तीतिवैदिकप्रयोगनिर्वाहस्तुछान्दसत्वादित्यन्ये। आहुरिति। युक्तंचैतत्। भाष्येसर्वत्रगोरजादिप्रसङ्गे यदित्युक्तेः। अपवादइति। बाधकइत्यर्थः। तदप
वादेञादीनांण्यादयोऽर्थविशेषलक्षणादितिपूर्वविप्रतिषेधेनबाधकइतिभावः। धेनुरनञितिनञ्वानञइत्युक्तेर्नञ्पूर्वेनढगितिबोध्यम् ॥

धेनोः कादेशसत्त्वेनेकनित्यनुचितमत आह। ठकमित्यर्थ इति। कैयट इति। तदर्थात इति प्रकरणे इति शेषः। सूत्ररूपमिति। विद्यालक्षणसूत्रान्तादिति वार्तिके वार्तिकसूत्रिक इति भाष्योदाहरणात्। सूत्राच्चकोपधादिति सूत्रे संख्याप्रकृतेः सूत्रवाचकादिति वाच्यम्। यथाष्टक इति नेहमाहा वार्तिक इति भाष्याच्चलतल प्रकरणस्थभाष्यप्रामाण्याच्चसरि

नचैवं धेनुकं गोधेनुकं चनसिध्येदिति वाच्यम्। धेनुरनञ्इकमुत्पादयतीति विशेषवचनस्य भाष्ये आपिशलिमतत्वेनोदाहृतत्वात्। इकमिति। ठकमित्यर्थ इति कैयटः। अत्रिकलिभ्यामिति। अयमर्थः। सूत्रकृता सास्य देवतेत्यधिकारे अग्नेर्ढगिति सूत्रितं दृष्टं सामेत्यधिकारे कलेर्ढगिति वार्तिककृता पूरितम्। तदिदं सूत्रद्वयमपनीय प्राग्दीव्यत इति प्रकरणे ऽग्निकलिभ्यां ढगिति पठनम्। तेन अग्नेरपत्यम् अग्निना दृष्टं साम अग्नौ भवं वा योगम् तम्। अग्नेः स्ववा आग्नेयं कालेयमिति सिद्धम्। एतेन मीमांसकैर्यदुक्तं कलेर्ढगिति पाणिनीयसूत्रमपार्थकमित्यादि तत्सर्वं वैयाकरणमीमांसकसन्तोषार्थमिति प्रपञ्चितं शब्दकौस्तुभे। द्व्यपत्यादि विकारान्तार्थसाधारणाः प्रत्ययाः। स्त्रीपुंसाभ्यामप्राग्‌त्यनुवर्तते स्त्रैणं इति। स्त्रीषु भवः स्त्रीभिश्चर तिस्त्रीभ्यो हितं इत्यादि। वत्यर्थेनि। सामान्यापेक्षं ज्ञापकमिति भावः। अत एवोदाहर तिस्त्रीवदिति। कथं तर्हि लत्वले। स्त्रीत्वस्त्रीता पुंस्त्वं पुंस्तेति। आचत्वादिति चकारादिति वस्यते। द्विगोर्लुगनपत्ये। द्विगोरिति षष्ठी। तदर्थस्य देनुत्वम्। तद्वरथन्तरसामत्वादेरिवभावि नोपि बुद्ध्या द्व्यवसायात्। तदेतदाह। द्विगोर्निमित्तमिति। अजादिरिति। एतच्चोत्तरसूत्राद्‌चीतस्यापकर्षाल्लभ्यते ॥

तोयानुदात्त इति सूत्रभाष्याच्च वार्तिकेपि सूत्रलाङ्गीकारादिति भावः ॥ द्व्यपत्यादि विकारान्तार्थसाधारणाः प्रत्ययाः ॥ सामान्यापेक्षमिति। स्त्रीपुंसाभ्यामिति योगापेक्षमित्यर्थः। हेतुत्वमिति। ननु स्थानसंबन्धः प्रत्ययादर्शनस्यैव लुक्त्वात्। नाप्यानन्तर्यसंबन्धः। पञ्चकपालस्य पुरोडाशस्येदं पाञ्चकपालमित्यादावतिप्रसङ्गादिति भावः। रथन्तरसामत्वादेरिति। यदि रथन्तरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयादित्यादि इति श्रुतावितिभावः ।

नन्वचीत्यपकर्षेद्दिरयदस्त्वनस्येदमित्यधिकारविहितयतो लुक् न स्यात्। न चेष्टापत्तिः। येन विधिस्तदन्तस्येति सूत्रस्थभाष्यविरोधादित आह। वाग्रहणमिति। समर्थानामिति
सूत्रस्थमित्यर्थः। तेन कस्यचिदजादेरपि लुक्सिद्धिरिति भावः। अग्रे तु न संबध्यते। फक्फिञोरिति सूत्रेऽन्यतरस्यांग्रहणात्। वस्तुतो वीतिनापकृष्यते। अनभिधानान्नातिप्र
सङ्ग इति तत्त्वम्। तस्यैवेति। अत्र गोत्रप्रत्ययस्यान्यलुकोः संभवो बीजम्। स चोपपादयिष्यते। गोत्र इत्यस्य फलमाह। कुवलस्येति। अत्र फले लुक्प्राप्त्यनगोत्रप्रत्यय इति स्प
ष्टम्। तस्यैवालुग्यथा स्यादिति। गोत्र इतीत्युक्तिस्तत्त्वेऽप्येतदर्थलाभ इति एतन्मात्रेणैवेति बोध्यम्। तद्राजस्येत्यंशोऽत्र बहुष्वित्यनुवृत्तेस्तदप्येतत् प्रकरणस्थमिति बोद्ध्यम्।
जनपदशब्दात्क्षत्रियादञिति सूत्रेण तद्राजलुकोऽप्ययमलुगुक्तः। यञ्गोत्रस्त्रियामिति सूत्रेणास्य णित्वं किमर्थम्। वतण्डस्य गोत्रापत्यं स्त्री वतण्डी। वतण्डाच्चेति विहितयञो
लुक् स्त्रियामिति लुकि शार्ङ्गरवादित्वात् ङीन्। तस्या अपत्यं वातण्ड्यो जाल्म इत्यादौ वृद्ध्यर्थम्। न च गोत्रे लुगचीति लुक्प्रतिषेधः ईकारेण व्यवधानादित्युक्तम्। तत्र किङ्कार

वाग्रहणमनुवर्त्यं व्यवस्थितविभाषाश्रयणेन वा॥ गोत्रेऽलुगचि॥ गोत्रे किम्। यस्कादिभ्यो गोत्र इति प्रकरणेन यस्य प्राप्तं तस्यैवालुग्यथा स्यात्। नेह। कुवलस्ये
दं कौवलम्। बादरम्। यूनि लुक् ॥ ६७ ण्यक्षत्रियादिति पुंवद्भाव इत्युक्तम्। न त्वेकदेशोक्तिः। पुंवत्त्वेन ङीन इव लुकोऽपि निवृत्तेरिति तच्चात्र बाधकम्।

यद्वा। तन्नेत्यस्य तत्प्रयोजनं न पुंवद्भावेन ङीन्लुकोर्निवृत्तिसिद्धेरित्यर्थ इति तत्तद्विरोधः। यदपि वान्यस्मिन्निति सूत्रेण गोत्रयुवसंज्ञयोः समावेशे पीलाया अपत्यं
पैलः। पीलाया वेत्यण्। तस्यापत्यं युवा णो द्व्यच इति फिञ्। पैलादिभ्यश्चेति लुक्। पैलस्य छात्राः पैलायाः। अत्रापि गोत्रे लुगिति फिञो लुक्प्रसङ्गः। असमावेशे त्वप्र
प्राप्तौ अन्तरङ्गत्वात्पैलादिलुगिति उक्तम्। तस्यायं भावः। समावेशे हि तीयाद्यापत्यस्य लुङ्मात्रस्य मध्येऽपवादन्यायेनायमलुक् स्यात्। असमावेशे तु युवप्रत्ययविष
ये स्याप्रवृत्तेस्तेन न्यायेन भूम्नि प्राप्तस्येत्यर्थलाभ इति मतद्विरोधाले शतोऽप्यस्माकमिति दिक् ॥

द्दद्दे नि। द्विगोर्लुगनपत्य इत्युत्तरम्। अचि। यूनि फक् फिञोरन्यतरस्यां गोत्रेनेति कार्यमित्यर्थः। एतेनैवं न्यासे द्विरयद् इति सिद्धिरित्यपास्तम्। ननुद्वयोः सावकाशयोरेक त्रप्रसङ्गे
स्मद्दत्यत्र दीर्घत्वयोरिवैकस्य द्विकार्ययोगमूलकेनासंभवेन केवलेनासम्भवेन वा विप्रतिषेध इतीको गुणवृद्धी इत्यादिषु भाष्ये स्पष्टम्। एवं च प्रकृते न तस्य विषयौ तआ
ह। अत्र च ज्ञापकमिति। एवं च ज्ञापकादेव बाध्यबाधकभाव इति भावः। आदिवृद्धिप्राप्तिविषये तद्बाधो ज्ञाप्यते। अत एव व्यापदि भवं वैयापदमित्यादावपि नोपधावृद्धिः। नञा

इह द्विगोर्लुगनपत्येचि। यूनि गोत्रेनेत्येव सूच्यताम्। तथा च लुगलुग्ग्रहणं शक्यमकर्तुम्। अजादाविति किम्। ग्लौचुकायनरूप्यम्। प्राग्दीव्यतीये किम्। तस्मै हितं ग्लौचु
कायनीयम्। ननु उपगु अ इति स्थिते ओर्गुणं बाधित्वा परत्वाद्वोऽञ्णितीति वृद्ध्या भाव्यम्। गुणस्तु पिचव्य इत्यादिरवकाशः किं च कृते गुणे वादेशे च अत उपधाया इति वृद्ध्या
भाव्यं तत्राह। आदिवृद्धिरिति परत्वादिति भावः। अन्त्योपधावृद्ध्योरवकाशः। नौः। पाचकः। आदिवृद्धेरवकाशः। शुभ्रुत्। सौभ्रुतः। औपगवः। त्वाष्टः। जागत इत्यादौ उभयप्र
सङ्गे परत्वादादिवृद्धिरेव भवति। न्वङ्नः प्रसङ्गविज्ञानं सकृदिति न्यायाश्रयणात्। अत्र च ज्ञापकम्। अनुशतिकादिषु पुष्करसच्छब्दस्य पाठः। अन्यथा उपधावृद्ध्या पौ
ष्करसादेः सिद्धत्वादुत्तरपदवृद्ध्यर्थस्तत्र पाठोऽनर्थकः स्यात्। अकृतेति परिभाषायाश्च समर्थग्रहणमेव ज्ञापकम्। तद्धि परिनिष्ठितपरमित्युक्तम्। परिनिष्ठितत्वं च
ङ्याप्प्रातिपदिकांश एव न तु सुविशिष्टे इत्यवधेयं तेन औपगवः दण्डिमानित्यादिसिद्धम्। अश्विमानणिति सौत्रप्रयोगश्चेह लिङ्गम्॥ ७) पिवृद्धिप्राप्यात द्विषयस्त्वा

त्। एज्विधायकेन निषेध इत्यन्यदिति दिक्। ज्ञापकमिति। एतच्च के घटेत्रैव स्पष्टम्। ङ्याबिति। तदंशे परिनिष्ठितत्वफलं तु शालीयसिद्धिः। अन्यथैकादेशात् प्राग्यस्येति लोपे
शालशब्दाकारश्रवणापत्तिः। श्रविष्ठासु जातः श्रविष्ठ इत्यादौ अन्तरङ्गानपीति न्यायादेकादेशेन। अत एवाकारश्रवणम्। तद्विषयतद्धितोऽपि ततः प्रागेव। एतद्बलादेव तद्वि
ये समर्थादित्यस्यानुपस्थितिः। उपगोरित्यत्र तु गुणोत्तरं लोपे ओ सित्यस्य निवृत्तौ औपगवासिद्धिः। दण्डीमानित्यापत्तिश्चेति भावः ॥

नङ् इति। तद्धित्वं हि विग्रहे त्यत्र गुणनिषेधार्थम्। हस्वविनाशोन्मुखत्वेन तु गभावे हि गुणप्राप्तिरिति तस्य तज्ज्ञापकता बोध्या। शक्यमकर्तुमिति। यदि तथा ज्ञापकं तदा ऽकर्तुं शक्यमित्यर्थः। यदि तु तत्राकृतसन्धेरित्युच्यते तत्राकृतसन्धेरेव। अन्यत्र तु अनियम इत्यर्थस्तदा परिनिष्ठितादेवेत्यर्थमावश्यकं तदिति बोध्यम्। अकृतव्यूहपरिभाषाया स्तु नफलम्। सेदुपदस्यादौ पदावधिके व्याख्याने सेदृस् असितिस्थिते ऽकृसंप्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात् पूर्वं संप्रसारणे। वलादित्वाभावादिट्

यदि तु नङो ङित्करणेनाकृतव्यूहपरिभाषा ज्ञाप्यते। प्रामादिगणे विषयितस्युत्तरपदलोपस्याकृतसन्धेरित्यत्राकृतसन्धिग्रहणेन परिनिष्ठितात्तद्धितोत्पत्तिस्तर्हि समर्थग्रहणं शक्यमकर्तुम्। ननु समासस्तद्धितेन नित्यं वाध्येत। न च तद्धितस्य वैकल्पिकत्वात्पक्षे सोपीति वाच्यम्। यत्रोत्सर्गापवादौ महाविभाषया विकल्प्येते तत्रापवादेन मुक्ते उत्सर्गो न प्रवर्तत इति पारे मध्ये षष्ठ्या वेति वाग्रहणेन ज्ञापितत्वादित्याशङ्क्याह। दैवयज्ञीत्यादि। जातित्वादिति। यत्तु प्राचोक्तं अणन्तत्वान्ङीबिति। यच्च व्याचख्यु टिड्ढाणञित्यनेनेति तदुभयं प्रामादिकमिति भावः। औत्स इति। उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झर इत्यमरः। तस्यापत्ययोरास्तु गाङ्गे यो भी म इतिवत्। जीवति तु वंश्ये युवा। पितृपितामहादिरुत्पादकप्रबन्धो वंशः। तत्र भवो वंश्यः। दिगादित्वाद्यत्। पौत्रप्रभृतीत्यनुवृत्तं षष्ठ्या विपरिणम्यते व्याख्यानादित्याह। पौत्रादेरिति। तु शब्दो भिन्नक्रमः युवेत्यस्मात्परो बोध्यः। स च एवकारार्थ इत्याशयेनाचष्टे। युवसञ्ज्ञमेवेति ॥

प्राप्तिरेवनेतितत्सिद्धेः स्पष्टं चेदमप्यत्रैव वक्ष्यते। तत्त्वेवं यदि तु ज्ञाप्यत इत्यनेन सूचितम्। ज्ञापितत्वादिति। न च षष्ठीसमासविधानं व्यर्थम्। अन्तनस्तद्विषये तस्येदमित्यस्य प्राप्तेरिति वाच्यम्। अनन्तरादिपदेस्तस्य चारितार्थ्यात्। अनभिधानेन हि तत्र तद्धिताभावस्य भाष्ये स्पष्टमुक्तत्वादिति भावः। प्रामादिकमिति। उपगोः प्रवराध्यायप्रसिद्धत्वात् उपगोर्गोत्रापत्यमिति तद्व्याख्यातृभिर्विग्रहप्रदर्शनाच्चेति भावः। पितृपितामहादीति। अतएव पितृव्यामातुलादीनां नवंश्यत्वम् ॥

तृतीयेद्वयोरिति। उपगोस्तृतीयेषाञ्चेऽणियोरित्यर्थः। त्रयाणामणिञ्फकाम्। नन्वत्रपक्षेऔपगवादिञिप्रत्ययद्वयमनिष्टंप्राप्नोति। औपगवइतीष्टंचतृतीयेनसिद्ध्यति। गर्गादिभ्योयञित्यादेश्चानर्थक्यंप्राप्नोति। गोत्रेपक्षेद्वयस्यविरोधाद्गार्ग्यादिञितत: प्रत्ययान्तरेनिष्टंचप्राप्नोति। यदित्वस्यात्रपक्षेविध्यर्थत्वंमदाननियमत्वमितिप्रत्ययान्तात्प्रत्ययनिषेधस्यावश्यवक्तव्यत्वम्। नचगोत्रपदेनगोत्रागोत्रसमुदायउच्यतेतत्रपूर्वोनग्रहणं गोत्रग्रहणात्। एकपदंवसामर्थ्यात्सावधारणम्। पुत्रेएकः पौत्रेऽपरस्तदपत्येचापर इतिगोत्रसमुदायेबहूनांप्राप्तौएकएवापत्यप्रत्ययइतिनियमेनैकाभ्यनुज्ञाद्वारापरमप्रकृतेर्विधिरपिपरंपरापत्यापत्यवत्संबन्धेप्रवर्त्ततइत्यनुमीयतइतिनदोषइतिवाच्य

एकोगोत्रे। अपत्यप्रत्ययइति। एतच्चाधिकारबलाल्लभ्यते। औपगवइत्यादि। उपगोरण्। गर्गादिभ्योयञ्। नडादिभ्यः फक्। सूत्रारम्भफलं मतभेदेनव्यवस्थापयति। गोत्रइति। स्वज्ञेत्रन्तदपेक्षया एकोनसंख्यानांतृतीयेद्वयोः चतुर्थेत्रयाणामित्यादीत्यर्थः। यद्देति। तृतीयेएकस्मादनिष्टोत्पत्तिः। चतुर्थेद्वाभ्यामित्यादीत्यर्थः। पितुरेवेति। तथाचामरः। आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियांत्वमी। आहुर्दुहितरंसर्वेपत्यन्तोकन्तयोः समेइति ॥

म्। तथाविधेरनुमानेगौरवात्। एतदेवाभिप्रेत्यैवंनियमोपपादनोत्तरंभाष्येउक्तम्। इहोत्सादपितर्यपत्ययुक्तेप्रत्ययान्तात्प्रतिषेधोवक्तव्यः। परमप्रकृतेश्चोत्पत्तिर्वक्तव्येतिविधित्वेप्रतिषेधोवक्तव्यः। गोत्रपदलक्षणयानियमत्वेउत्पत्तिर्वक्तव्या। एकेनवाक्येनोभयार्थत्वलभ्यम्। एकोपत्यप्रत्ययोभवतिनतुनद्विषयेगोत्रेप्रत्ययइत्येवार्थः स्यादित्येकाभ्यनुज्ञैवदुर्लभेतितद्भावइत्यरुचेराह। यद्देतीति। अत्रपक्षेदृष्टस्यसित्यासर्वेषपत्ययुक्तेषुप्रत्ययान्तात्प्रतिषेधोवक्तव्यइतिभाष्योक्तानिष्टवारणायनियमार्थमिदम्। गोत्रशब्दस्यगोत्रजातिपरत्वेतिनियमोपपत्तिः ॥

अग्रपक्षे युक्त्यन्तरमाह। न पतन्तीत्यादि। अपत्यं तोकं तयोः समे इत्यमरस्तस्यायमर्थः। तद्घटितसन्तानपरम्परयोरिति। किं चैकाभ्यनुज्ञाद्वारा परम्परापत्यापत्यवत्त्वं वंश्ये प्र
वृत्त्यनुमानापेक्षयापितामहादीनामपत्यमित्यनुमानस्यैव युक्तत्वम्। न देतत्सर्वं पितामहादीनामपीति मुख्यपक्षे त्विति वदतां मूले ध्वनितम्। ननु मुख्यपक्षे स्वनियमत्वेऽप्यन
न्तरापत्यप्रत्ययान्ताद् गोत्रे प्रत्ययो दुर्वारस्तावतापि गोत्रे एकस्मिन्नन्तं नत्वेन नियमाबाधात्। एतदभिप्रायेणैव सर्वेष्वपत्ययुक्तेष्विति पक्षे नियमार्थत्वमुपपाद्य पुनरुक्तं भाष्ये
सर्वेष्वपत्ययुक्तेषु प्रत्ययान्तात्प्रतिषेधो वक्तव्य इति। न च गोत्रपदेनापत्यसमुदायो लक्ष्यते। तेन परमप्रकृतेरेव भविष्यतीति वाच्यम्। अपत्यमित्यनुवृत्त्यैव सिद्धे गोत्रग्रह

णतः प्राचामित्यत्र बाह्निपक्षस्य नेमेत्यपत्यमितिमुख्यतिः पाङ्क्तिविंशतीति सूत्रे भाष्यकृता दर्शिता। व्यवहितेष्वपि पितामहादीनामुद्देश्येति प्रसिद्धं जरत्कार्वा
युपारव्यामेषु। एतत्प्रकारोप्याह। अपत्यं पौत्रप्रभृतीति। आद्यपक्षे अपत्यमिवापत्यमिति गौणीरनिरासयणी यास्यात्। औपगवादिजिति। यस्यापत्यन्तद्वारका
देव प्रत्यय इति भावः। एवं सत्यनुपदं वक्ष्यमाणस्य पितामहादीनामिति मुख्यपक्षस्य विवरणे उपगोरण इष्टसिद्धवद्व्याप्युक्तिः संगच्छते। मूलादिति पञ्चमी तु
अवधिसमर्पणमात्रार्था न तूपगुरूपमूलस्य संस्थान्तःपातित्वार्था। अत एव व्यवहितेष्वपक्षे मूलपदमनुपादाय शततम इत्येवोक्तत्वान्मूलस्य संस्थान्तःपातित्वं त्रे
यम्। इत्यपीत्यपि भिन्नक्रमोः गर्गादिभ्यस्त्व गे वो ञः। गोत्राद्यूनि गोत्रप्रत्ययान्तादेवेति। न तु युवप्रत्ययान्तादिति प्रथमपक्षे र्थः ॥

णवैयर्थ्यापत्तेः। गोत्राद्यूनीत्यस्य सत्त्वेन यूनी ग्रहणं व्यर्थं मा दिति चेन्न। भाष्ये प्रत्याख्यातत्वेन दोषापत्तेः। स्पष्टं चेदं सर्वं सूत्रशेषे भाष्ये इति दिक्। ननु युवेति। अपत्यं
पितुरेवेति पक्षे पञ्चमे यूनि विवक्षिते चतुर्थान्तस्य यान्तादेव प्रत्यय इत्यनिष्टं प्राप्नोति नतीयादिष्टापोत्पत्तिर्न सिध्यति अत एको गोत्रे इति साहचर्यादस्य नियमत्वं युवप्
रं च तद्घटितापत्यसमुदायपरं विध्यभ्यनुज्ञानेन प्राप्नवदिति भावः ॥

अपत्ये: स्वविधित्वमेव स्यान्न नियमस्त्वमित्याशङ्कामाह वेराह। द्वितीयपक्षे त्विति। पितामहादीनामपीति मुख्यपक्षे लिङ्गर्थः। अत्र शास्त्रसिद्धिरस्त्येव किं त्वलिङ्गमपि प्राप्नोती तितन्निरुक्तनये नियमार्थत्वमेवेत्यर्थः नन्वस्त्रियामित्यस्य स्त्रीभिन्ने यूनीति नार्थः। स्त्रीविषये यूनि प्रत्ययमालाप्रसङ्गात्। एको गोत्रे इत्यस्य तु न प्रवृत्तिः युवसंज्ञया गोत्रसंज्ञा याबाधात्। न च स्त्रियां यूनि न प्रत्यय इति वाक्यभेदेन तदर्थः। गोत्रप्रत्ययेन स्त्रिया अभिधानानापत्तेः किं तु वाक्यमेव स्यादत आह। अयं भाव इति। विशेषस्याविवक्षायामिति।

द्वितीयपक्षे तु मूलप्रकृत्यनन्तरयुवभ्यो नेत्यर्थः। स्त्रियां त्विति। अयं भावः। अस्त्रियामिति योगो विभज्यते। यूनि शब्दस्वरूपपरम्। पष्ठ्या चैवं यत्र युवसंज्ञा विधीयते तत्रास्त्रियामित्युपतिष्ठत इत्यर्थः। सिद्धस्य गतिरियम्। जीवति तु वंश्ये युवा अस्त्रियामिति तु सूत्रयितुमुचितम्। अतद्‌ग्रन्तपरः किम्। युभ्यः अपत्यंशे भ्यः। कथं तर्हि प्रक्षिप्यतां हा शरयायमेपिलीति। अपत्यरूपविशेषस्याविवक्षायां शैषिको णः बाहविरिति। यत्तु बाप्लो इत्यनेन इति भाष्ये नामापत्येनोक्तम्। केवल स्वाङ्गेऽर्थेऽपत्ये नायोगात्सामर्थ्यात्तद्‌वविधिः सौबाहविरिति। तच्चिन्त्यम्। जानन्ति बाहवीत्याश्वलायनसूत्रादाह्वारिभ्यश्चेति सूत्रे बाहविरिति भाष्यस्योदा हरणाच्च बाहोः संज्ञाशब्दत्वात्। औडुलोमिरिति यद्यपि लोमन्शब्दो गणे पठ्यते तथापि सामर्थ्यात्तदन्तग्रहणम्। उडुनीव शरा इव लोमानि यस्य तस्यापत्य मौडुलोमिः शारलोमिः। बहुत्वे तु इञपवादोऽकारः प्रागेवोक्तः। उडुलोमाः शारलोमाः। इह याः पुराणादिप्रसिद्धाः संज्ञास्ताभ्य एव प्रत्ययो बोध्यः। निरूढ त्वेन प्रथमोपस्थिताभिरेव विधेर्निराकाङ्क्षत्वात्। यस्तु इदानीं तनो बाहुस्तस्यापत्ये बाहव इत्येव। उक्तं च हरिणा ॥

सर्वनाम्नां च सामान्यरूपेण विशेषरूपेण च सर्वार्थबोधकत्वमिति तस्यापत्यमिति सूत्रे भाष्यकैयटयोः स्पष्टमिति भावः। अत एवापत्यं गोत्रमिति वार्तिकप्रयोगः संगच्छ ते। अपत्यस्येदमापत्यं पौत्रप्रभृतीति तदर्थः। इह। प्रतिपदविधानविषये। निरूढत्वेन। प्रसिद्धतरत्वेन ॥

ऋषित्वेप्याह। बाह्वादित्वादिति। यञणोरिति। गर्गादौ शिवादौ च पाठादिति भावः। शिवादिपाठे मास्तु तत्र गङ्गा चेति योगविभाग एवाऽन्यथा लुक् स्त्रियामित्यनेन संयुञ्जैव पठेत्। परिशेषितस्य वेति। आङ्गिरसे परिशेषप्राप्तस्येत्यर्थः। निषेधमुखेन नियमानां प्रवृत्तिरिति प्रौढवादपक्षाश्रयेणेदं लभ्यत इति विधिमुखेन प्रवृत्तावनन्तरस्येति न्यायेनाप्येन लभ्यत इति बोध्यम्। तस्मादिति। जात इति पञ्चम्यर्थे सप्तमीति भावः। कैयटेति। इदं च प्रकृतसूत्रे भाष्ये ध्वनितम्। तथाहि। अत्राण्ग्रहणमर्थं शिवादिभ्यो यथाविहितमित्येव।

बाह्वादित्वादावतण्डाद्याप्यञणोः प्राप्तयोः आङ्गिरसे यञेवेति नियमार्थं सूत्रम्। लुक् स्त्रियां विहितस्येति। परिशेषितस्यैवेति बोध्यम्। एतत्स्व आङ्गिरस इत्यनुवृत्त्या लभ्यते अत एवाह अनाङ्गिरसे त्विति। वक्ष्यमाण इति। अपिञोरनार्षयोरिति सूत्रेणेति भावः। अश्वादिभ्यः फञ्। गोत्रे इति। क्वचित् यून्यपि तथाहि। अश्वादिगणे गोत्रप्रत्ययान्तास्त्रयः पठ्यन्ते वैल्व आनडुह्य आत्रेय इति। विलिर्नाम राजर्षिः। ततो वृद्धेत्कोसलेति ञ्यङ्। आनडुह्यशब्दो गर्गादियञन्तः। आत्रेयशब्दो ढगन्तः। ततः सामर्थ्यात् युनि फञ्। न हि युवानं विना अपत्यप्रत्ययद्वयं लब्धुं शक्यते। पुंसि जात इति। गणसूत्रम्। पुंसि विद्यमानो यो जातशब्दस्तस्मात्फञित्यर्थः। जाताया इति लिङ्गविशिष्टपरिभाषया एकदेशस्य पूर्वान्तत्वेन ग्रहणाद्धा प्राप्तः फञ्। शिवादिभ्योऽण्। गोत्र इति निवृत्तमिति। इतः प्रभृति अपत्यसामान्ये प्रत्यया इति भावः। एतच्च वृत्तौ कैयटादिग्रन्थे च स्पष्टम्। यत्तु यूनि लुक्सूत्रे भाष्यकैयटपर्यालोचनया गोत्रसञ्ज्ञासूत्रपर्यन्तं गोत्राधिकार इति लभ्यते ॥

ॐ णत्तिदेः। नैवमिञ्स्यात्। पुनर्वचनवैयर्थ्यापत्तेः। न च बाधकबाधनार्थं तत्। तस्यैवाभावात् इति न त्रोक्तम्। गोत्र इत्यनुवृत्तौ तु शिवादिभ्यो गोत्र एवेञ् नान्यत्रेति नियमेन चारितार्थ्यात्। अण्ग्रहणं विनाऽणो सिद्धेस्तस्य सार्थक्येन इत्संगतिः स्यादतस्तन्निवृत्तिरत्रेति तद्भावः। भाष्यकैयटेनाऽतत्र हि सर्वत्र शास्त्रीयगोत्रग्रहणे गार्ग्यायणादिभ्यो युवप्रत्ययान्तेभ्यः समूहादौ गोत्रत्वप्रयुक्तो वुञ् न स्यादित्याशङ्क्यापत्याधिकारादन्यत्र लौकिकं गोत्रम् अपत्यं गोत्रं सेति सूत्रस्थराजन्यग्रहणं ज्ञापकमुक्तं भाष्ये। गोत्रसञ्ज्ञासूत्रपर्यन्तं गोत्राधिकार इति च कैयटेन व्याख्यातम् ॥

मतान्तरमिति। विशिष्टं मतमित्यर्थः। अनयोरेतदन्तरमित्यादौ विशेषवाचिनोऽप्यन्तरशब्दस्य सत्त्वात्। नियमविधिसम्भवे विधेरवज्यायस्त्वेन तदनुरोधेनाणेवविधानमिति प्रकृतसूत्रस्थोक्तभाष्याशयसत्त्वेनेदं भाष्यं नतन्निवृत्तौ मानम्। गाङ्गेयादावनन्तरापत्ये प्रत्ययस्तु द्रौणायनवदुपचारेण साधुः। किं चात्रैव तन्निवृत्तौ मनुषीशब्दात्कु

तन्मतान्तरमिति भावः। विपाश्शब्दोऽत्र पठ्यन्ते। तस्य कुञ्जादिष्वपि पाठात्पक्षे च्फञ्। वैपाशः। वैपाशायनः। जरत्कारुशब्दः पठ्यते। ततः शुभ्रादित्वाड्ढक्। ढेलोपोऽकद्र्वाः इत्युलोपः। जारत्कारवः। जारत्कारेयः। विश्रवणरवणशब्दौ पठ्यते। नो विश्रवः शब्दस्यादेशौ प्रकृत्यन्तरे एव वा इति विषये तत्समानार्थौ। वैश्रवणः। रावणः। इतश्चानिञः। द्व्यचः किम्। उदधेरपत्यमौदधः। यत्तु काशिकायां मरीचेर्मारीच इति प्रत्युदाहृतम्। तच्चिन्त्यम्। बाह्वादित्वेनेञ्प्रसङ्गा त्। तथा च मिरचोल्यात्स्वरइतिसूत्रे भाष्यम्। मरीचिशब्दो बाह्वादिषु पठ्यत इति। शुभ्रादिभ्यश्च। मृकण्डशब्दोऽत्र पठ्यते। स च अदन्तः। एतच्च मृगय्वादयश्चेति सूत्रे उज्ज्वलदत्तग्रन्थे स्पष्टम्। मृकण्डस्य मुनेस्तीर्थं तद्याम्यामतिनिर्मलमिति स्कान्दे मार्कण्डेयः। उकारान्तपाठे तु ढेलोपोऽकद्र्वाः। कल्याण्यादीनामिनङ्। परस्त्रीशब्दोऽत्र पठ्यते। पारस्त्रैणेयः। अनुशतिकादित्वादुभयपदवृद्धिः। परभार्यायामुत्पन्न इत्यर्थः। बिदादिगणे तु परस्त्री परशुश्चेति पठ्यते। आपद्यन्त इति शेषः। परस्त्रियामपत्यं पारशवः। ब्राह्मणाच्छूद्रायां तेनैवोढायामुत्पन्नः। सा च जात्यन्तरयोगात्परस्त्री। तदिह परस्त्रीति कल्याण्यादिपुषष्ठीतत्पुरुषः। बिदादौ तु कर्मधारय इति विवेकः। तथा च याज्ञवल्क्यः। विप्रान्मूर्द्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् ॥

त्तितमपत्यमित्यर्थविवक्षायां मानुषो जात्यमिति णप्रत्ययस्य भाष्यकृतदृष्टस्यासिद्धिरितीदमेव युक्तं मतम्। शास्त्रीयं गोत्रं च युवत्वानाक्रान्तपौत्रप्रभृत्यपत्यरूपम्। तदर्थकत्वं च वास्तवं शास्त्रप्रक्रियानिर्वाहायकल्पितं चेति भावः ॥

अंबष्ठः शूद्र्यामिति। शूद्रकन्यायामित्यर्थः। जातौ ङीष्प्रयोग आर्षः। अत्रानुलोमप्रस्तावात्ताविवाहितेत्याहुः। तृतीयं रूपमिति। उभयोरप्यत्र कुलटाशब्देन ग्रहणमि

अम्बष्ठः शूद्र्यां निषादो जातः पारशवोपि चेति। न चैवं पारशवेपि स्यानिवद्भावात् अनुशतिकादिकार्यं स्यादिति वाच्यम्। पूर्वोत्तरपदसंप्रमोहात्। न ही ह एतावा न्पूर्वपदस्यादेशः इति विषयविभागो गम्यते। सतीभिक्षुकी त्वत्रेति। अत्र इनङ् द्वि धौ। उक्तं चामरसिंहेन अथवान्धकिनेयः स्यादन्धुलश्चासतीसुतः। कौलटेरः कौलटेयो भिक्षुकी तु सती यदि। तस्यां कौलटिनेयोस्याः कौलटेयोपि चात्मज इति। केचित्तु क्षुद्राया अपि इनङा तृतीयं रूपमाहुः। वृत्तौ तु क्षुद्राभ्यः परत्वाङ्गिलुक्तं सच्चिन्त्यम्। तस्य वैकल्पिकतयास्वयमपि पक्षे ढकः स्वीकाराद्वा इनङः प्राप्तेर्दुर्वारत्वात्। तयोरेवेति। तत्र टाबन्तात्तद्धिते लुप्ते लुक्तद्धितलुकीति टापो लुकि पुनरजादिलक्षणष्टाप् जातिलक्षणस्य ङीषो बाधक इति भावः। यत्तु हन्यासकृतोक्तम्। चटकादैरगित्येव सांप्रदायिकः सूत्रपाठ इति। तद्भाष्यवार्त्तिकविरोधादुपेक्ष्यम्। आरगुदीचामा उदीचां ग्रहणं पूजार्थम्। चंचकादेवढकृ ढगारकौ पर्यायसिद्धेः। अन्यत इति। अनकारान्तात् कुतश्चिदित्यर्थः। जडस्येति। जलघातमाङलयोरभेदाज्जडः पङ्गुः। पण्डः। एतच्च उक्तधात्वोर्माधवीयवृत्तौ स्पष्टम्। तत्र पण्डस्यापत्यं त्रिमादिर्बोध्यम्। गार्ष्टेय इति। ननु गृष्टिः सकृत्प्रसूता गौरिति कोशाच्चतुष्पाद्भ्यो ढञ् इत्येव सिद्धम्। अत्राहुः कोशे गौरिति प्रायोवादः सकृत्प्रसूता सर्वापि गृष्टिः। अतोयमारम्भ इति। वस्तुतस्तु गृष्टिशब्दः शुभ्रादिः तथा चान्तोदात्तं ढगन्तं प्रयुज्यते। स ह्यार्ष्टेयो वृषभो गोभिरानडिति ॥

तिभावः। पूजार्थमिति। इदं च गोधाशब्दमात्रविषयं सूत्रमिति मते। जडादिभ्यो विधानार्थत्वे तु तत्र विकल्पार्थमावश्यकमेतदिति बोध्यम्। अरक्तुन कृतः। गोधार इत्यस्ति व्याप्तेः। कोशस्य यथाश्रुतन्त्वमभ्युपेत्याप्याह। वस्तुतस्त्विति ॥

पाक्षिकेति। अन्यथा शुभ्रादिढकाच्च नुष्याद् ञो बाध एव स्यादिति भावः। ऋषिशब्द इति। प्रवराध्यायप्रसिद्ध इति शेषः। तदा बोध्यमिति। तदापि वुञर्थमावश्यकमिदमिति भावः। पारिभाषिकेपि गोत्रे न स्तीति। अत्र प्रयोगे स्त्वभावमात्रमनेन प्रतिपाद्यते न त्वेतावता तत्र पारिभाषिकग्रहणमिति भ्रमितव्यम्। अपत्याधिकारादन्यत्वेन लौ

अतः पाक्षिकाद्युदात्तार्थमिह सूत्रे ऋषिशब्दग्रहणम्। ढञिति। गृष्ट्यादित्वादिति भावः। केकयमित्रयु। केकयस्यापत्यं स्त्री कैकेयी जनपदशब्दात् क्षत्रियादञ्। मैत्रेयिक याश्लाघते मित्रयूनां भावे नेत्यर्थः। गोत्रचरणात् श्लाघात्याकारेति वुञ्। तत्र हि लौकिकं गोत्रं गृह्यते। लोके च ऋषिशब्दो गोत्रमिति प्रसिद्ध इति काशिका। एतच्च यदा मित्रयुश ब्दोऽभेदोपचारात् तदपत्ये सन्ताने वर्तते तदा बोध्यम्। यदा तु गृष्ट्यादित्वाढ्ञो यस्कादित्वाद्ढुग्लुक् तदा पारिभाषिकेपि गोत्रे न क्षतिः। प्रलयादागतं प्रालेयम्। इयादे शेन वृद्धिर्न बाध्यते विषयभेदात्। अचो ञ्णिति वृद्धिः यादेश इयादेशः। अङ्गस्य तु उभयोर्विशेषणं । नकार्यमिति हरदत्तः। दाण्डिनायना एतानीति। दण्डिन् हस्तिन् आभ्यां नडा दित्वात् फक्। येस्तु नडादिष्वेतौ न पठ्येते तेषामत एव निपातनात् फक्। टिलोपाभावस्तु निपातनादेव। आथर्वणिक इति वसन्तादिषु पठ्यते। अथर्वणा प्रोक्तो ग्रन्थः अथर्वा। उ पचारात् तमधीते आथर्वणिकः। जिह्माशिन्निति शुभ्रादिः। जिह्माशिनोऽपत्यं जैह्माशिनेयः। वाशिनोऽपत्यं वाशिनायनिः। उदीचां वृद्धादिति फिञ्। भ्रूणहन् धीवन् एतयोः ष्यञि तकारादेशो निपात्यते। भ्रूणघ्नो भावो भ्रौणहत्यम्। धैवत्यम्। इह हन्तेस्तत्वे हनस्तोऽचिण्णलोरित्येव सिद्धे निपातनं ज्ञापयति ॥

किकग्रहणे स्यैवन्याय्यत्वादिति बोध्यम्। एतत्सर्वमपि नासूचितम्। निपातनमिति। न च कुत्वाभावार्थं निपातनम्। तदर्थत्वेपि धैवत्यसाहचर्येणास्यां परिभाषायामस्य ज्ञाप कत्वपरस्य मृजेर्वृद्धिरिति सूत्रस्य भाष्यस्य प्रामाण्येन च तत्त्वनिपातनस्यापि सूत्रकृतास्वर्थविषयत्वेन ज्ञापकत्वाक्षतेः ॥